श्रि.
४३

कादशी निंद्या मासीवे शुक्ल कृष्णयोः ॥ ऊर्जे चतुर्दशी शुक्ला कृष्ण पक्षेतु पंचमी
॥ १८ ॥ सप्तमी चाष्टमी सौम्ये पक्षयो रुभयोरपि ॥ पौषे पक्ष द्वये चैव चतुर्थी पंचमी त
था ॥ १९ ॥ माघेतु पंचमी षष्ठी शुक्ले कृष्णे यथा क्रमम् ॥ तृतीयाच चतुर्थीच फा-
ल्गुने सित कृष्णयोः ॥ २० ॥ तिथयो मास शून्याख्या वंश वित्त विनाशकाः ॥ आ
सु श्राद्धं प्रकुर्वीत नैव सन्मंगलं क्वचित् ॥ २१ ॥ अथ नक्षत्र दोषः ॥ द्वितीयया चानु-
राधा श्युत्तराच तृतीयया ॥ पंचमीच मघा युक्ता चित्रा स्वात्यो स्त्रयो दशी ॥ २२ ॥ प्र-
ति पद्यु त्तरा षाढा नवम्यां कृत्तिका यदि ॥ सप्तम्यां हस्त मूले च षष्ठ्यां ब्राह्मं भवे यदि
॥ २३ ॥ पूर्वा षाढ पदा ष्टम्यां एका दश्यांच रोहिणी ॥ द्वादश्यां च यदाश्लेषा त्रयो-
दश्यां मघा यदि ॥ २४ ॥ सद्य कार्य्ये कृते चेत्स्या त्स्य रामा सान्मरणं ध्रुवम् ॥ अथ चै-
त्रादि मासे शून्य नक्षत्राणि ॥ अश्विनी रोहिणी चैत्रे शून्ये भे परि कीर्तिते ॥ चित्रा स्वाती
च वैशाखे ज्येष्ठे विश्वे ज्य तारके ॥ २५ ॥ भग वासव वाषाढे श्रावणे हरि विश्वभे ॥

४२

सं टि ॥ नभस्ये वारुणं त्वाष्ट्रं भज पादश्च युग्यपि ॥ २६ ॥ कार्तिके पितृब्रह्मर्क्षे सौ-
४७ म्ये चित्रा द्विदैवते ॥ पौषे दस्रकराद्रा स्यु र्माघे मूलंच विष्णुभम् ॥ २७ ॥ तपस्ये-
श्रक्र भरणी शून्य भान्याहुरग्रजाः ॥ एषु यत्तु कृतं कर्म धनं स्सह विनश्यति ॥
२८ ॥ अथ चैत्रादि मासेषु शून्य राशयः ॥ घट मत्स्य वृषा युग्म मेष कन्या स वृश्चिकाः ॥
तुला चाप कुली राख्याः मृग सिंहाश्च राशयः ॥ २९ ॥ चैत्रादौ मास शून्याख्या वे-
श्म वित्त विनाशनाः ॥ अथ विषमतिथिषु दग्ध लग्नानि ॥ मृग सिंहौ तृतीयायां प्रथमा
यां तुला मृगौ ॥ पञ्चम्यां बुधराशी द्वौ सप्तम्यां चाप चंद्रभे ॥ ३० ॥ नवम्यां सिंहकी
टाख्यावेकादश्यां गुरोर्गृहे ॥ वृष मीनौ त्रयोदश्यां दग्ध संज्ञास्त्वमी गृहाः ॥
॥ ॥ दग्ध लग्ने नि यत्कर्म कृतं सर्वं प्रणश्यति ॥ ३१ ॥ अथैतेषां दुष्टयोगानां आवश्य
क कृत्ये परिहारम् ॥ केन्द्रे चैव त्रिकोणे च शुभेषु पञ्चये ऽपि वा ॥ एकोऽपि बलवां श्वा-
पि शून्यतिथ्युडु नाशकः ॥ ३२ ॥ तिथयो मास शून्याश्च शून्य लग्नानि यान्यपि ४७

॥ मध्य देशे विवर्ज्यानि नदू व्याणी तरे युतु ॥ ३३ ॥ पंचबंध काणा लग्नानि मास
शून्या पंच राशयः ॥ गौड मालवयो स्त्याज्या अन्य देशे न गर्हिताः ॥ ३४ ॥ वर्जयेत्स
र्व कार्येषु हस्तार्क स्थंचमी तिथौ ॥ भौमाश्विनी च सप्तम्यां षष्ठ्यां चंद्रे द्रवं तथा ॥
॥३५॥ बुधानुराधा मष्टम्यां दशम्यां भृगुरेवतीम् ॥ नवम्यां गुरु पुष्यं चैकादश्यां श
नि रोहिणी म् ॥ ३६ ॥ गृह प्रवेशे यात्रा यां विवाहेच यथा क्रमम् ॥ भौमे ऽश्विनीं
शनौ ब्राह्मं गुरौ पुष्यं विवर्जयेत् ॥ ३७ ॥ हस्ते रवौ शश धरेण मृगोत्तमांग भौमेऽ
श्विनी बुध दिनेच तथानुराधा ॥ पुष्ये गुरौ भृगु सुते ऽपिच पौलधिदंस्य रोहिण्यथार्कत
नये ऽमृत सिद्धि योगाः ॥ ३८ ॥ यदि विष्टिव्यती पातो दिनं वाप्य शुभं भवेत् ॥ ह
न्यते ऽमृत योगेन भास्करेण तमोयथा ॥ ३९ ॥ अथा नंदादि योगः ॥ आनंदः काल दंडश्च धू
म्राक्षो ऽथ प्रजापतिः ॥ सौम्यो ध्वांक्षो ध्वजश्चापि श्री वत्सो वज्र मुद्गरौ ॥ ४० ॥
छत्रं मित्रं क्रमे णैव मानसः पद्म लुंबकौ ॥ उत्पात मृत्यु काणाख्याः सिद्धिश्चैव शु-

न.ति भास्तो ॥ ४१ ॥ मुशलंच गदाख्यश्च मातं गोरस सप्त्वर ॥ स्थिर : मवर्द्ध मानश्च
४६ नाम तुल्य फला न्यमी ॥ ४२ ॥ भानु वारेऽश्वि नक्षत्रात्सा भिजित्कै स्त्त सर्वभैः ॥
भवंति क्रमशो योगाः अष्टा विंशति संख्य काः ॥ ४३ ॥ मृगा दारभ्य रात्री घ्रे म्लेे
पातः कुज वासरे ॥ हस्ता द्बुधे ऽनुराधाया: गुरु वारे तथैवच ॥ ४४ ॥ उत्तरा षाढ त
श्शुक्रे शात तारादि तः शनौ ॥ अथैतेषु कियद्दुष्ट योगाः त्याज्याशः ॥ ध्वांक्षेध्रायुध मुद्गरेषु
घटिका स्त्याज्या स्तु पंचा दितः पद्मं लुंबक यो श्च तत्र उदिता धूम्रे सदे का पुनः ॥
देःकाणे मुशला ह्वये ऽपिच गदे सप्ते वति स्त्वरे म्रत्यु त्पात करस्स सांदिन गता स्ता:
काल दंडे तथा ॥ ४५ ॥ अथ दोषा मवाद् भूतार वियोगाः ॥ सूर्य्या च्चतुर्थे दशमे च षष्ठे विश्व
र्क्षे के विंशति मे न वर्क्षे ॥ भवंति षड्भानु स दग्ध योगाः कुयोग विध्वंस कराः प्रदिष्टाः
॥ ४६ ॥ सिद्धि योगः ॥ ज्येष्ठा वाड्रि मघा विशाष वसवो मैत्रं य मारव्य रवौ सोमे सैव वि
शाख पुष्य पवना श्चित्रा त्व षाढा द्वयम् ॥ भौमे विश्व जलेश मित्र वसवः प्राम्भाद्र ४६

सर्पो शिवः   मूली रेवति पूर्वयोनि भरणी वस्वश्वि मूला बुधे ॥ ४७ ॥ जीवे मूल
मघार्द्र याम्य वरुणाः पूषा शशी रोहिणी   शुक्रे स्वाति भुजंग दैवत मघा पुष्यो त्तरा-
रोहिणी ॥ सौरा वर्य्यम मूल हस्त वरुणा पादा द्वयं रेवती चित्रा विष्णु मघाश्व सर्व
समये त्याज्या कुयोगा इमे ॥ ४८ ॥ अथसिद्धियोगः ॥ सूर्य्येऽर्के मूलोत्तर पुष्य दास्रं च
न्द्रे श्रुति ब्राह्म शशीज्य मैत्रम् ॥ भौमे ब्यहि बुध्न कृशानु सार्प्यं ज्ञे ब्राह्म मैत्रा र्क कृ
शानु चांद्रम् ॥ ४९ ॥ जीवेन्त्य मैत्राश्व्य दितीज्य धिस्नं शुक्रे न्त्य मैत्रा श्व्य दितिश्र
वोभम् ॥ शनौ श्रुति ब्राह्म समीर भानि सर्वार्थ सिद्धौ कथितानि पूर्वैः ॥ ५० ॥ द्वीरा
त्तो या ह्वाश वात्यौक्ष भात्स्व ब्राह्मात्पुष्या दर्य मर्क्षा च तुर्भैः ॥ स्या दुत्पातो मृत्यु काणौ
च सिद्धि र्वारेऽर्क्वाद्ये तत्फलं नामतुल्यम् ॥ ५१ ॥ कुयोगास्तिथि वारो त्थास्तिथि
भोत्या भवारजाः ॥ हून वंग खसे ष्वेव वर्ज्यास्त्रितय जास्तथा ॥ ५२ ॥ अथवारन-
क्षत्रोत्पन्नसिद्धियोगः ॥ मूलं मर्के श्रवश्चंद्रे भौमे चोत्तर भाद्रपात् ॥ कृत्तिका बुधवारे

नु गुरु वारे पुनर्वसुः॥ पूषा शुक्रे शनौ स्वाती सिद्धियोग उदाहृतः ॥ ५३ ॥ अथ तिथि
वारोत्थाद्दुष्टयोगाः ॥ द्वादश्यर्के विधौ षष्ठी भौमे सप्ताष्टमी बुधे ॥ दशे शुक्रे शनौ रुद्रो गु-
रौ नव हुता शनौ ॥ ५४ ॥ द्वादश्यर्के विधौ रुद्रो भौमे पंच बुधेऽग्नयः ॥ गुरौ ष-
ष्ठयष्टमी शुक्रे दग्धा रव्यौ नवमी शनौ ॥ ५५ ॥ चतुर्थ्यर्के विधौ षष्ठी द्वितीया ज्ञे-
ऽष्टमी गुरौ ॥ नव शुक्रे विशाखश्च सप्तमी कुज मंदयोः ॥ ५६ ॥ शनौ षष्ठी भृगौ
सप्ताष्टमी जीवे बुधे नव ॥ कुजे दश विधौ रुद्राः कर्क चो द्वादशी रवौ ॥ ५७ ॥ व्यति
पत् च रवौ सप्त सं वर्तौ योग ईरितः ॥ दग्धा दीन् तिथि वारोत्थान् त्यजेत् योगान्
शुभे सदा ॥ ५८ ॥ अथ नक्षत्रा द्विहितोऽपित्याज्य स्तिथिः ॥ द्वितीया मनुराधायां मघायां
पंचमी तिथिम् ॥ त्यजेत्षष्ठी च रोहिण्यां पूर्व भाद्र पदेऽष्टमीम् ॥ ५९ ॥ अथ मृत्यु योगः॥
अनुराधा रवौ सोमे उत्तरा षाढ संभवम् ॥ बुधेऽश्विनी मृगो जीवे शुक्रे श्लेषा शनौ
करः ॥ ६० ॥ भौमे शत भिषा चार्य्यै मृत्यु योगोऽर्थ नाशकः ॥ अथ दग्धा तिथि योगः ॥

शि· भरण्य र्के विधौ चित्रा जीवे चोत्तर फाल्गुणी ॥ भौमे चैवोत्तरा षाढा धनिष्ठा बुध वास
४९ रे ॥ ६२ ॥ शुक्रे ज्येष्ठा त्वसं मंदे त्यजे देत द्धि दग्ध भम् ॥ अथ त्रिविध गंडांतं ॥ नक्षत्र
तिथि राशी नां गंडांतं त्रिविधं त्यजेत् ॥ ६३ ॥ नव पंच चतुर्थ्या ते द्वेकाद्ई घटिका
मतम् ॥ तावन्मितं ततोऽग्राणां आद्या वापि परि त्यजेत् ॥ ६४ ॥ ज्येष्ठा मूल र्क्षयोः
संधौ रेवत्य श्विभयोस्तथा ॥ वृश्चिकाख्य धनुः संधौ लग्न स्यैक घटी मत म् ॥ ६५
॥ अथार्द्ध यामः ॥ अर्द्ध यामाः परित्याज्या वेद सप्त द्वि पंच माः ॥ अथ त्रिपद्ध संख्या
काः क्रम शोर वि वासरात् ॥ ६६ ॥ अथ कुलिक कंटक काल वेला यम घंटा ख्याः त्याज्य मुहू
र्ताः ॥ मन्वर्क दृश नाग र्तु वेद नेत्र मिताः क्षणाः ॥ कुलिकाख्या रवे र्वार क्रमतः
कंटका बुधात् ॥ ६७ ॥ गुरोस्तु काल वेलाख्या शुक्रात्ते यम घंटकाः ॥ त्यजे दे
तान् शुभे कार्य्ये निशी थे तु मुहूर्त्त कान् ॥ ६८ ॥ अथ दुष्ट क्षणः ॥ क्षणः चतुर्दशः
सूर्य्ये नव द्वादश को विधौ ॥ सप्तमो निशि भौमेन्हि तुर्य्ये प्वाथ बुधेऽष्टमः ॥ ६९ ॥ ४९

षष्ठ द्वादशको जीवे चतुर्थ नवमे भृगौ ॥ शनौ चाद्य द्वितीयोच त्याज्या दुष्ट क्षण।

अथ दुष्ट क्षण चक्रम्

| सू. | च | म | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १४ | ९ | ७ | ८ | ६ | ४ | १ |
| + | १२ | ४ | + | १२ | ९ | २ |

दिवा कुलिका दीनां चक्रम्

| सू. | च. | म | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १४ | १२ | १० | ८ | ६ | ४ | २ |
| ६ | ४ | २ | १४ | १२ | १० | ८ |
| ८ | ६ | ४ | २ | १४ | १२ | १० |
| १० | ८ | ६ | ४ | २ | १४ | १२ |

रात्रौ कुलिका दीनां चक्रम्

| र | चं | मं | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| १३ | ११ | ९ | ७ | ५ | ३ | १ |
| ५ | ३ | १ | १३ | ११ | ९ | ७ |
| ७ | ५ | ३ | १ | १३ | ११ | ९ |
| ९ | ७ | ५ | ३ | १ | १३ | ११ |

दूमे ॥ ७० ॥ रवौ षट् ६
दश १० सप्ता ७ ष्ठ ८ मनु१४

संख्य मुहूर्त काः ॥ चंद्रेऽब्धि ४ वसु ८ षट् ६ द्विः श्व १३ मनु १४ रवेदा ९ र्क १२ संमिता: ॥ ७१ ॥ भौमे द्वि-२ त्रि ३ चतुः ४ षष्ठ ६ दश १० संख्या क्षणाः स्मृताः ॥ बुधे वेदा ४ ब्धि २ वस्वंक ८ ६ मनु १४ दिक् १० प्रमिताः क्षणाः ॥ ७२ ॥ जीवे भूपा १६ धिव २ तिथ्यं १५ गई मनु १४ सूर्य्या १२ सिता ध्वते ॥ शुक्रे पंचां- ५०

१ ग्रि
५१

५क ९ षट् ६ वेद ४ दिग १० र्क १२ मनु १४ संमिताः ॥ ७३ ॥ मंदे भू १ नेत्र २ रुद्रा ११ ष्ट ८ दशा १० दित्य १२ मुहूर्तकाः ॥ त्याज्या पंच दशां घ्रा चा वुधे रुक्षा क्षणा दूने ॥ ७४ ॥ अथ देश भेदेन त्याज्य दोषा. ॥ विंध्य-हेमाद्रि मध्येतु मनाधेयमघंटकः ॥ अंगोंधे मत्स्य देशे ना दोष हून्ने तरत्रसः ॥ कापूमीरे कुलिक स्त्याज्य स्त्व-र्द्ध याम स्तु सर्वतः ॥ ७५ ॥ अथ संक्रांतौ त्याज्य कालः ॥ अयने विषुवे त्याज्यं पूर्वं मध्य परं दिने ॥ शेष संक्रमणे पूर्वं पश्चा त्षोडश नाडिकाः ॥ ७६ ॥ अथ तिथि क्षय वृद्धि दोषः ॥ तिथीनां त्रितयं वार मेकं स्पृशति यत्र वै ॥ अवमंत दिनं ज्ञेयं शुभ कर्म्म सुसं त्यजेत् ॥ ७७ ॥ वाराणां त्रितयं यत्र तिथिरेका स्पृशे यदा ॥ त्रिद्यु स्स्पृशे ति

रव्यादि वारे रात्रौ मुहूर्त्ता त्याज्या. ॥

| सू | च | म | बु | बृ | शु | श |
|---|---|---|---|---|---|---|
| ६ | ४ | २ | ४ | १६ | ५ | १ |
| १० | ८ | ३ | २ | २ | ९ | २ |
| ७ | ६ | ४ | ८ | १५ | ६ | ११ |
| ८ | १३ | ६ | ९ | ६ | ४ | ८ |
| १४ | १४ | १० | १४ | १४ | १० | १० |
| + | ९ | + | १० | १२ | १२ | १२ |
| + | १२ | + | + | + | १४ | + |

ख्या तान्न ग्राह्यं मंगलादिषु ॥ ७८ ॥ अथ त्रिपुष्कर यमल योगो ॥ रवि रविज भौम वारे
५२ भद्रायां विषम पाद ऋक्षं चेत् ॥ त्रै पुष्करारव्य योगः त्रिगुण फलो द्विगुण भेजुगल
म्॥ ७९॥अस्यार्थः॥भद्रा तिथौ यदा रवि भौम शनि वारे कृत्तिका पुनर्वसू॥ विशाखा उत्तरा
फाल्गुणा पूर्व भाद्र पदा उत्तरा षाढ ॥ एतदृक्षं भवति तदा त्रिपुष्करः यदा पूर्वोक्त ति
थौ वारे मृग शिरः चित्रा धनिष्ठा तदा द्विपुष्करः ॥ तत्फलम् ॥ तत्र वृद्धे मृते नष्टे शुभे वा
प्य शुभे पिवा ॥ त्रिगुणं द्विगुणं सर्वं जायते क्रमशः फलम् ॥ ८० ॥ नारदः ॥ तद्यात्त
दोष शांत्यर्थं गोत्रयं मूल्य मेव वा ॥ द्विपुष्करे द्वयं दद्यान्न दोष स्त्वृक्ष मात्रतः ॥
८१ ॥ अथ रव्यादि वारे पुन शुभाशुभ योगः ॥ रवौ हस्ते ऽश्विनी मूलं धनिष्ठा चोत्तरा
त्रयम् ॥ पुष्य स्तथा व्रमो चैव सिद्धि योगा इमे मताः ॥ ८२ ॥ विशाखा भरणी स्व
र्ये मघा ज्येष्ठा ऽनु राधिका ॥ सप्तमी द्वादशी तद्वद्धि रुद्रा च चतुर्दशी ॥ ८३ ॥ चं
द्रे च श्रवणः पुष्यो ऽनुराधा रोहिणी मृगः ॥ दशमी नवमी वाथ सिद्धि योग शशुभा ५२

मु० शि० ५२
वहः ॥ ८४ ॥ पूर्वाषाढोत्तराषाढे स्वाती चित्रा विशाखयोः ॥ सोमे चैकादशी षष्ठी
वर्जनीया त्रयोदशी ॥ ८५ ॥ भौमे श्लेषाश्विनी मूलं मृगशीर्षस्त्रयोदशी ॥ तृतीया
चाष्टमी षष्ठी सिद्धिदा कीर्तिता बुधैः ॥ ८६ ॥ उत्तराषाढभं चार्द्रा धनिष्ठा त्रितयं तथा ॥ द्वि-
तीया दशमी भौमे वर्जनीया प्रयत्नतः ॥ ८७ ॥ बुधे पुष्योऽनुराधा च कृत्तिका
रोहिणी मृगः ॥ द्वितीया सप्तमी चैव द्वादशी च शुभप्रदा ॥ ८८ ॥ धनिष्ठा भरणी मू-
लमश्विनी रेवती बुधे ॥ तृतीया प्रतिपच्चापि विरुद्धा नवमी स्मृता ॥ ८९ ॥ गुरौ पु-
ष्योऽनुराधा च विशाखाश्विपुनर्वसू ॥ रेवती दशमी चैव पूर्णिमा शुभदा स्मृता ॥
९० ॥ जीवे यक्ष्य मीनेशा चतुर्थी शततारका ॥ कृत्तिकादि चतुष्कं च तथा चोत्तर-
फाल्गुनी ॥ ९१ ॥ शुक्रे चित्राश्विनी पूर्वा रेवती च पुनर्वसू ॥ श्रवणः प्रतिपत्ष-
ष्ठी सिद्धा चैकादशी तथा ॥ ९२ ॥ भार्गवे रोहिणी ज्येष्ठा पुष्यो श्लेषा मघा तथा ॥
द्वितीया सप्तमी चैव विरुद्धा सर्वकर्मसु ॥ ९३ ॥ शनौ स्वाती श्रवं पूर्वा फाल्गुनी च त- ५३

या मृगाः ॥ चतुर्थी नवमी चापि तिथिः सिद्धा चतुर्दशी ॥ ७४ ॥ पूर्वा पादो त्तरा षाढा चि-
त्रा हस्तो ऽ थ रेवती ॥ उत्तरा फाल्गुनी षष्ठी निषिद्धा सप्तमी ग्रन्थो ॥ ७५ ॥ द्विवेदि कुल सं
भूत सरयू कृत संग्रहे ॥ चिरो मणौ समाप्ते या अष्टमी ये प्रभा शुभा ॥ ७६ ॥ इति
श्रीसंग्रह शिरो मणौ शुभा शुभ कथनं नामाष्टमी प्रभा ॥ ८ ॥ अथ त्याज्य प्रकरणम् ॥
तिथि नक्षत्र वाराणां दुष्ट योगा न्यरस्यम् ॥ व्यती पातादि दुर्योगान् विष्टी दर्शी के संक्रमा
न् ॥ १ ॥ जन्म क्षोतिथि मासांश्च तिथ्य र्द्धमव मन्दि नम् ॥ गंडां तन्त्रि विधं दुष्टं क्षीणेन्दुः
पाप कर्तरी ॥ २ ॥ पाप ग्रहो ग्रखले वारे या मार्द्र कुलिकादि कान् ॥ जन्म राशि विलग्ना
भ्या मष्टमं लग्न मेवच ॥ ३ ॥ दिन मेकं तु मासां ते ऋक्षां ते घटिका द्वयम् ॥ घटि के
कं च तिथ्यंते लग्नांते घटिका र्द्धकम् ॥ ४ ॥ विषाख्य नाडिका भानां पात मेकार्गलं तथा
॥ दग्धाहं क्रांति साम्यंच लग्ने षो रिपु मृत्यु गम् ॥ ५ ॥ दिनार्द्धं चर जन्म र्क्षे संधौ तु-
पल विंषातिः ॥ रोगो स्य त्याग रिक्तानि सूत कं मातु राते वम् ॥ ६ ॥ जन्मे शास्तं मनो

मु. भंगं शुभे ष्वेतानि संत्यजेत् ॥ एमः ॥ सर्व स्मिन्विधु पाप युक्त नुलवा वर्द्धे निशान्हो

५५ घंटी त्र्यं पंचे कुन वांशके ग्रहण तः पूर्व दिनानां त्रयम् ॥ उत्पात ग्रहतो ऽप्यहं च शुभ

हो स्यातेच्च दुष्टं दिनं प रामा संग्रह भिन्न भं त्यज शुभे योऽहं तथो त्पात भम् ॥ ७ ॥

अस्यार्थः ॥ सर्व स्मिन् इति सर्व स्मिन् शुभे कार्य्ये एतानि वै नि श्चयेन त्यज परिह-

रेत्यर्थः ॥ विधुना पापे न वा पापैः क्षीणे इन्दुः मही सुतार्क तनये वा शुक्रो शुक्रो तनु ल-

वो लग्न लग्न पन वांशौ त्याज्यौ ॥ पूर्णः क्षीणोऽपि वा चंद्रो लग्ने सर्वत्र गर्हितः ॥ इति

कस्यपोक्तेः ॥ पापेन्दू लग्न गौ वांश गतौ वर्ज्यौ शुभे सदैव च ॥ निशान्हो रर्द्धे रात्र्य-

र्द्धे दिनार्द्धे च घटी त्र्यंशं विंशति पलानि दश पूर्वं दश पश्चाच्च परि हर ॥ उक्तंच ॥ मू-

र्तः कालो निव सति मह्यां निशायांच दिन दले यस्मादृश पूर्व पर स्त्वस्मा द्वर्ज्यानि च प-

लानि ॥ कुन वांश कं पाप ग्रहन वांश कं परि हर ॥ अथ ग्रहणातः पूर्व दिनानां त्रयं परि

हर ॥ उत्पात ग्रहतः उत्पाताः दिव्य भौमांतरिक्षाः ॥ यस्मिन् दिने भवन्ति ततोऽ ह्न

ति
५६

ग्रहोत्त सप्त दिनानि वर्ज्यानि ॥ ग्रहो ग्रहणं तस्मा दपि सप्त दिनानि वर्ज्यानि ॥ उक्तंच ॥
चंद्र सूर्यो परा गेषु त्र्यहं पूर्वं शुभे त्यजेत् ॥ स साहम शुभं पश्चात् स्फुटं ग्रहणे सूत
कम् ॥ त्रि विधोत्पात तश्चोर्द्ध सिद्धि का सूत्र दर्शने ॥ सप्त रात्रं न कुर्वीत यात्रो द्वा हा
दि मंगल मिति ॥ अंगिरा अपि ॥ सर्व ग्रासे तु सप्ताह मर्द्ध ग्रासे दिन त्रयम् ॥ त्रि द्व्येकांगुल तो
ग्रासे दिन मेकं विवर्जयेत् ॥ वशिष्ठः ॥ सर्व ग्रासे दिना न्यष्टौ सर्व कार्य्ये विवर्जयेत् ॥ ख
ग्रानि त्रि भागो न मर्द्ध ग्रासे चतुर्दिनम् ॥ चतु र्थांशे त्रि रात्रं स्यात् ग्रहणे चंद्र सूर्य्य
॥ अत्र कार्य्यं स्या वश्यक त्वे परि हारो ज्योति र्नि बंधे ॥ पंच दिना नि वशिष्ठ स्त्रिदि
कौशिक स्त्वेकम् ॥ यवना चार्य्य स्य च गतं पंच मुहूर्त्तानि दूष यति राहुः ॥
वेधो नित्यने मित्ति कादि कृत्याति रिक्त विषयः ॥ गुरुः ॥ नित्यने मित्ति के का
होम क्रिया सु च ॥ उपा कर्म्मणि चोत्सर्गे ग्रह वेधो न विद्यते ॥ इति शुभदो सोते -
दिन मिति ॥ शुभ दो स्याता वाराह संहिता याम् ॥ चंडा घ्रानि मही कंप संध्यानि र्घात

५९

शि निश्वनाः ॥ परिवेष रजो धूम रक्तार्क स्तमनो दयाः ॥ दुर्भिध्या न्तरस स्नेह मधु पुष्प
२ फलोद्गमा : ॥ गो पक्षि मद वृद्धिश्च शुभा यमधु माधवे ॥ इत्यादयः ऋतु परले नो-
क्ताः यद्दिने एते भवंति तद्दिन मेव त्यज ॥ अथ ग्रहभिन्नभं ग्रहै भौमादि भिर्भिन्नं भेदि-
तं तथा योर्द्व ग्रह योर्युद्धं यस्मिन्दिने नक्षत्रे युद्धं यातम् ॥ तथोत्पात भम् ॥ यस्मि-
न्नृक्षे दिव्यां तरिक्ष भौमा स्त्रि विधोत्पाताः संभूताः ॥ एतानि ग्रह भिन्न योद्धृ उत्पात न-
क्षत्राणि षण्मा संत्यज ॥ भेद स्ताग स्वेद यो यत्र वास्या क्षिति विवाह दंष्ट्रा वने ॥ ना-
रदः ॥ ग्रहणो त्पात भं त्याज्यं मंगलेषु ऋतु त्रयम् ॥ इति ॥ ननु नक्षत्र संधौ जाय माने
ग्रहणे किं नक्षत्रं दूषये दित्यत आह ॥ यर्गः धरः ॥ यस्मिन्विधुं राहु रिनं चाधि क्षे ग्रस्ता-
नि तत्त्याज्य मृतु त्रयं स्यात् ॥ पाणि ग्रहे पुमरणं विधले इत्वा भयं प्रत्ते इन्द्र जवे ज्ञात् ॥
गन्यच्च ॥ पक्षां तरेण ग्रहण द्वयं स्या द्यदा तदा तद्ध हणे यमं भम् ॥ पश्चाद्धि शुद्धं भवति-
द्वितीयं पाणि ग्रहे शुद्ध्याति भोग षक्षादेति ॥७॥ नेष्टं ग्रह र्क्षे सकला ई पाद शसे ऽकमात्त ५७

के ग्रहणेंदु सा सान् ॥ पूर्वं पर स्ताञ्जुभयो स्त्रि घस्रा ग्रस्ते ऽस्त गे वाप्यु दिते ऽर्द्ध खंडे ॥ ८ ॥
अस्यार्थः ॥ नेष्टमिति ग्रहर्क्षं ग्रहण नक्षत्रं क्रमात्संपूर्णार्द्ध चतुर्थांशग्रासे सति षट् त्र्येकमा-
सान्नेष्टम् ॥ गुरुः ॥ सर्वग्रासे सुषण्मासान्त्री न्मासांस्तु दले ग्रहे ॥ आपाद ग्रहणे धिष्ण्ये मा-
सैकम् विवर्जयेत् ॥ अथ क्रमात् ग्रस्ते ऽस्त गे ग्रहणार्द्ध ग्रासे उभयोः प्राक् पश्चात्त्र्य-
घस्रा नेष्टाः ॥ तथा ॥ अर्द्ध खंडे ग्रस्ता स्त ग्रस्तो दय योर भावे ऽपि ॥ अर्द्ध ग्रासे उभयोः
पश्चाच्च त्रिन्त्रि घस्रां नेष्टाः ॥ गुरुः ॥ ग्रस्ता स्ते त्रिदिनं पूर्वं पश्चाच्छुस्तो दये तथा ॥ खं-
ग्रासे त्रिदिनं निष्पृश्ये ये सप्त सप्त च ॥ कश्यपः ॥ ग्रस्तो दये परो ह्येषो ग्रस्ता स्ते ऽर्वाक् प्र-
योः ॥ ग्रुनि षार्द्दे तू भयं तत् खंडी खंड व्यवस्थयो रिति ॥ ८ ॥ जन्मर्क्ष मास ति-
थयो व्यति पात भद्रा वैधृत्य मापितृ दिनानि तिथि क्षयर्द्धी ॥ न्यूनाधि मास कुलिक प्र-
हर्द्ध पात विष्कुंभ वज्र घटिका त्रय मेव वर्ज्यम् ॥ ९ ॥ जन्मर्क्षेति ॥ जन्म नक्षत्र ज-
न्म मास जन्म तिथयः पुन कार्म्म सुवर्ज्याः ॥ अयं निषेध आद्य गर्भस्यैव ॥ नारदः ॥

संस्क्रि पृ९

न जन्म मासे जन्म र्क्षे न जन्म दिवसेऽपिवा ॥ आद्य गर्भ सुत स्याथ दुहितु र्वा कर उन्-
ह्नः ॥ जन्म मासः स विज्ञेयो वर्जितः सर्व कर्म्म सु ॥ वस्तुतस्तु ॥ यत्र शुक्लादि चांद्र मासे
चैत्रादौ जन्मा भूत् ॥ स चांद्रो मासो जन्म मासः त्याज्यः ॥ इंद्राग्नी यत्र हूयेते मासा
दिः सं प्रकीर्त्तितः ॥ अग्नी षो मौ स्मृतौ मध्ये समासः पितृ सोमकः हारीतोक्त मास लक्ष
णम् ॥व्याती पाता द्य स्व वर्ज्याः ॥ पितृ दिन म्माता पित्रो र्म्मरण दिनम् ॥ श्राद्ध दिन मि-
त्यर्थः ॥ तिथि क्षयर्द्धी तिथि क्षयो वृद्धि स्च तल्लक्षण माह वशिष्ठः ॥ स्पृशेत्तिस्त्र स्तिथ
यो वारे एक स्मिन्न व मा तिथिः ॥ तिथि वार त्रये चैका त्रि द्यु स्पृक् द्वे ऽपि निंदिते ॥ न्यूनमा
सः ॥ अधिक मास स्च वर्ज्य : संक्र मद्वय सहितः क्षय मासः ॥ असंक्रांतो ऽधिक मासः ॥
कालिकाद्ई महरो ॥ पातो महा पातः विकुम्भ योग वज्र योग यो राद्यं घटिका त्रयं वर्ज्यं ॥
एवं प्रकारेण केश्चि द्दुष्ट योगेन व घटिका वर्ज्या इत्युक्तम् ॥ यथा ॥ विष्कुंभा द्य घटित्रयं
च नव कं व्या घा त व ज्रो द्भवे ॥ इति वृत शते तथा व्याघाते वज्रकेका इति गणेश ज्योति ५९

मु० विड्ढ़त्ति रपि निरस्ता ॥ विष्कुंभवज्रयोस्तिस्रः षट् गंडातिगंडयोः व्याघातेनव शूलेतु पं
६० च नाड्यो विगर्हिताः ॥ इतिकश्यपोक्तेः ॥ परि घस्यार्द्धं वर्ज्यम् मूल स्याद्याः पंच गंडातिगंड
यो राद्याः षट्षट् घटिकाः व्याघाते चाद्याः नव घटिकाः वर्ज्याः ॥ ॐ ॥ वेदांगाश्च नवा
केन्द्र पक्षारंभ तिथौ त्यजेत् ॥ वस्तंक मनु तत्वा सप्तरा नाड्डी पराः शुभाः ॥ १० ॥वाप्या
राम तड़ाग कूप भवनारंभ प्रतिष्ठा व्रतारंभोत्सर्ग वधू प्रवे शन महा दानानि सोमाष्टके
॥ गोदाना ग्रयण प्रपा प्रथम कोपा कर्म्म वेद व्रत नीलो द्वाह मथाति पत्न शिष्णु संस्का
रान्सुरस्थापनम् ॥ ११ ॥ वाप्या एतेति ॥ वापी दीर्घिका आराम उपवनम् ॥ तड़ागः पुष्क-
रिणी ॥ कूपः प्रसिद्धः एतेषा मारंभ प्रतिष्ठा ॥ आरंभं निर्म्माणं प्रतिष्ठा उत्सर्गः ॥ तत्र गृह प्र-
तिष्ठा गृह प्रवेशो ज्ञेयः व्रताना मनंत व्रतादीना मारंभः ग्रहणम् ॥ उत्सर्ग उत्थापनम्
महा दानानि तुला पुरुषा दीनि सोमः ॥ सोमयागः । अष्टका श्राद्धम् । गोदानं केशांत संज्ञं
कर्म्म । आग्रयणं नवान्नेष्टिः । प्रपा जल शाला । प्रथम कोपा कर्म्म प्रथमारभ्यमाणं श्राव- ६०

रागी कर्म्म वेद व्रतं महा नाम्न्यादि त्रयम् ॥ महा नाम्नी उप निषद्व्रतम् ॥ वेद व्रतंच नीलो-
द्वाहः ॥ काम्य वृषोत्सर्गः ॥ अति पन्न शिशु संस्काराः अतिपन्नाः अतिक्रांताः जातकर्म्मा
द्यः शिशूनां संस्काराः देव स्थापनम् ॥ ११ ॥ दीक्षा मौंजि विवाह मुंड नमपूर्वन्देव तीर्थेक्ष-
णं संन्या साग्नि परि ग्रहौ नृपति संदर्शनाभिषेकौ गमनम् ॥ चातुर्म्मास्य समावृती श्रवणयो
र्वेधं परीक्षां त्यजेद्वृद्धत्वा स्त शिशुत्व इज्य सितयो र्न्यूनाधि मासे तथा ॥ १२ ॥ अत्र मूलपद्य
नानि शालासपः ॥ अस्तं गते गुरौ शुक्रे वाले वृद्धे मलि म्लुचे ॥ उद्यापन मुपारंभं व्रतानां नैव
कारयेत् ॥ अरस्लोश्वपः ॥ वापी कूप तडाग याग गमनं क्षौरं प्रतिष्ठा व्रतं विद्या मंदिर कर्णवेध-
न महा दानं वनं सेवनम् ॥ तीर्थ स्नान विवाह देव भवनं मंत्रादि देवेक्षणं दूरे रौवज्जि जीवि
शुः परि हरे दस्तं गते भार्गवे ॥ १४ ॥ उप नयनं गोदानं पाणि ग्रहणं प्रवेश गमनानि ॥ अ-
स्त मितेषु न कुर्य्यात्सुर गुरु सित पुत्र चंद्रेऽसु ॥ १५ ॥ अस्तमयादि फलमाह वादरायणः ॥ गु-
रोरस्ते पतिं हन्या च्छुक्रा स्ते चैव कन्यकाम् ॥ चन्द्रे नष्टे उभौ हन्या त्तस्मा दस्तं विवर्जयेत्

तस्मा द्बाल्ये च वार्द्धे च विवाहं नै
॥ १६ ॥ वाल भावे स्त्रियं हन्या द्वृद्ध भावे नरं तथा ॥ तस्मा द्बाल्ये च वार्द्धे च विवाहं नै
व कारयेत् ॥ १७ ॥ अधि मासे वर्ज्यानि रवस परि शिष्टे ॥ सोम यागादि कर्म्माणि नित्या-
न्यपि मलिम्लुचे ॥ तथैवा ग्रयणा धान चातुर्म्मास्यादि कान्यपि ॥ १८ ॥ महा लयाष्ट-
का श्राद्धो पा कर्म्मा द्यपि कर्म्मयत् ॥ स्पष्ट मास विशेषाख्य विहितं वर्जये न्मले ॥ १९ ॥
गर्गबृहस्पती ॥ अग्न्या धानं प्रति ष्ठांच यज्ञ दान व्रता नि च ॥ वेद व्रत वृषोत्सर्गं चूडा करण
मेवच ॥ मांगल्य मभि षेकंच मल मासे विवर्ज्जयेत् ॥ मरीचिः ॥ २० ॥ गृह प्रवेश
गोदान स्था ना श्रय महोत्सवम् ॥ न कुर्य्या न्मल मासे तु संसर्प्पांहस्यतो तथा ॥ २१
॥ वशिष्ठः ॥ वापी कूप तड़ागादि प्रतिष्ठा यज्ञ कर्म्म च ॥ न कुर्य्या न्मल मासे तु संसर्पा हस्पतो
तथा ॥ २२ ॥ यदा क्षय मासो भवति तदा क्षय मास स्य पूर्वोत्तरा वधि मासौ भवतः तत्र पू
र्वः संसर्पः द्वितीयों हस्पतिः । गार्ग्यः । वाले वा यदि वा वृद्धे शुक्रे वास्तं गते गुरौ ॥ मल-
मास इवैतानि वर्जये द्देव दर्शनम् ॥ २३ ॥ अपूर्व देवता स्था शुचः स्यु र्नष्टे भार्गवे ॥ ६२

मल मासे त्व नावृत्त तीर्थ यात्रां विवर्जयेत् ॥ २४ ॥ अना वृत्ता अपूर्व तीर्थ यात्रा ॥ अत्र नि-
यत कालानि सीमंत नाम करणा दीनि ॥ पूर्वा दस्तादि सत्वे ऽपि स्व स्वकाल एव कार्य्याणि
॥ २५ ॥ गुरुः ॥ मास प्रयुक्त कार्य्येषु मूढत्वं गुरु शुक्रयोः ॥ न दोष कृन्मले मासे गुर्वादि-
त्यादि कं तथा ॥ २६ ॥ अन्यत्रापि ॥ सीमंत यात कादीनि प्राप्तानां तानि यानिवै ॥ न दोषो
मल मासस्य मौढ्यस्य गुरु शुक्रयोः ॥ २७ ॥ वशिष्ठः अतीत काला न्य खिलानि तानि
कार्य्याणि सौम्या यन गे दिने प्रे ॥ सिते गुरौ वाप्यति हृस्य माने तदुक्त पंचांग दिनेष्व-
खंडे ॥ देवी पुराणे ॥ सिंह संस्थे गुरौ यत्नात्सर्वा रंभा न्विवर्जयेत् ॥ पुत्र भार्त्र कलत्राणि
हन्या च्छी घ्रं न संशयः ॥ २८ ॥ कारकी भजते नाशं संतानं सूयते ऽचिरात् ॥ देवारा म
तडागानि प्रपोद्यान गृहाणि च ॥ ३० ॥ विवाह यज्ञोपनय चूडादि च न सिद्ध्यति ॥ य-
था सिंह स्थितो जीव स्त थैव मकर स्थितः ॥ ३१ ॥ अयमपि निषेधो नियत कालानां न
संग्रह: ॥ वशिष्ठः ॥ नीच राशि गतो जीवः प्रशस्तः सर्व कर्मसु ॥ नीचे नीचांश क-

शि· स्त्याज्यो यस्मादेषेषु नीचता ॥ ३२ ॥ विशेषो सांडव्ये मोक्तः ॥ मवास्थो यदा जीवो वर्जयेत्सं
६४ चसां प्रयत्नम् ॥ ग्रेषेष्वपि च भागेषु विवाह प्रणो भनो मतः ॥ ३३ ॥ तोडरानंदः ॥ ग्रतिचारे
सप्त दिनं वक्रे द्वादशमेकच ॥ नीचस्थितेऽपि वा शीघ्रे मासमेकं विवर्जयेत् ॥ ३४ ॥ ज्योति
र्निबंधे ॥ हरिनी चारि भागेऽपि व्रतोद्वाहादि मंगलम् ॥ न निषिद्धं यदि स्वोच्चे स्वभे वा सं-
स्थितो गुरुः ॥ ३५ ॥ मघां त्यक्त्वा यदा गच्छेत्फाल्गुनीं च बृहस्पतिः ॥ पुत्रिणी धनिनी -
कन्या सौभाग्यं सुखमश्नुते ॥ ३६ ॥ क्वचित् पूर्वं तीर्थयात्रायां मौढ्यादि दोषो नास्ति ॥ गो-
दावर्यां गयां च श्री शैले ग्रहणद्वये ॥ सुरासुराणां गुर्वोश्च मौढ्य दोषो न विद्यते ॥ ३७
दपुराणे त्रिस्थलीसेतौ ॥ गयायां सर्वकालेषु पिंडं दद्याद्विधानतः ॥ अधिमासे जन्म दिने·
स्ते च गुरु शुक्रयोः ॥ ३८ ॥ न त्यक्तव्यं गया श्राद्धं सिंहस्थे च बृहस्पतौ ॥ अधिमासे सिं
ह गुरावस्ते च गुरु शुक्रयोः ॥ ३९ ॥ तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना ॥ वात्स्यः व-
ऋातिचारेण यद्यपि गुर्वादयस्तवहज्यं स ॥ यात्रोद्वाह प्रतिष्ठां च गृह चूडा व्रतादिकम् ॥ ६४

वर्ज्जयेद्यत्न तश्चैव जीवे वक्रातिचारगे ॥ ५० ॥ अस्यापवादो राजमार्त्तण्डे ॥ वक्रातिचार
गे जीवे वर्ज्जये त्तद नंतरम् ॥ व्रतोद्वाहादिचूडाया मष्टविंशतिवासरान् ॥ अथ दीपिकायाम्
त्रिकोण जाया धन लाभ राशौ वक्रातिचारेण गुरुः प्रयातः ॥ यदा तदा प्राह शुभं विलग्नं
विवाह पाणि ग्रहणं वशिष्ठः ॥ ५१ ॥ गुर्वादित्येऽपि सर्वं शुभकर्म्म वर्ज्जयेत् ॥ शौनकः ॥ एक राशि
गतौ सूर्य्य जीवौ स्यातां यदा पुनः ॥ व्रत बंध विवाहादि शुभ कर्म्माखिलं त्यजेत् ॥ ५३ ॥
विश्वघस्र पक्षेऽपि यस्मिन्न क्षेतिथि क्षयनाशः त्रयोदश दिनः पक्षः सोऽति निंद्यः ॥ उक्तंच ॥
पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरव काल योगः ॥ पक्षे विनष्टे सकलं विनष्ट मि-
त्याहुराचार्य्यवराः समस्ताः ॥ ५४ ॥ तथा ॥ त्रयोदश दिने पक्षे तदा संहरते जगत् ॥ अ-
पि वर्ष सहस्रेण काल योगः प्रकीर्त्तितः ॥ ५५ ॥ तस्मिन्पक्षे शुभ कर्म्म वर्ज्यं चंडेश्वरः ॥ त्र-
योदश दिने पक्षे विवाहादि न कारयेत् ॥ गर्गादिमुनयः प्राहुः कृते मृत्युस्तदा भवेत् ॥
उपनयनं पाणिग्रहणं वेश्मारंभादि पुण्य कर्म्माणि ॥ यात्रादि क्षयपक्षे कुर्य्यान्न जिजी-

विधुः पुरुषः ॥ ४७ ॥ अस्मिन्भूषादिकमपि त्याज्यम् ॥ राजमार्तंडः ॥ यात्रां चूडां वि-
वाहं श्रुति विवर विधिं शस्त्र सद्म प्रवेशः प्राग्रा वोद्यान हर्म्यं सुर नर भवना रंभ विध
विधेनो॥ मौंजीबंधं प्रतिष्ठां मणिक न करदा धारणं कुर्वते ये मृत्युः सिंह स्थिते ज्ये गुरू
दिन करयोरेक राशि स्थयोश्च ॥ ४८ ॥ सिंह स्थे गुरौ सत्यपि सिंहांशेस र्वं प्रत्रयो
दशांशे॥१३। २० भ्योऽनंतरं सन्यंशसंश त्रयम् ॥ पंचमो नवांश सिंहांशः तत्र गुरौ सति
विवाहो नेष्टः ॥ सिंह राशौ तु सिंहांशे यदा भवति वाक् पतिः ॥ सर्व देशे ष्व यं त्याज्यो दं-
पत्यो र्निधन प्रदः ॥ इति राजमार्तंडः ॥ सिंहेपि भग दैवत्ये गुरौ पुत्र पती भवेत् ॥ अत्यंत
शुभगा साध्वी धन धान्य समृद्धिदा ॥ ४९ ॥ अथ देशभेदात् लग्नः ॥ गोदा वर्य्युत्तरे
तीरे यावद्भागीरथी तटम् ॥ नेष्ट स्तत्र विवाहादि सिंहस्थे ज्ये सदा बुधैः ॥ ५० ॥ वशि-
ष्ठः ॥ भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ॥ विवाहो व्रत बंधो वा सिंहस्थे ज्ये न दु-
ष्यति ॥ ५१ ॥ अत्र विवाह व्रत बंधान्यत मशुभ कर्माणि निषिद्धा न्येव ज्योतिर्निबंधे ॥ संग·

लानीह कुर्वीत सिंहस्थो वाक् पतिर्यदा ॥ भानौ मेषगते सम्यगित्याहु र्यवनाचार्यः ॥
५२ ॥ कुत्रापि मकरस्थोऽपि न वर्ज्यः स्मृतः ॥ नर्म्मदा पूर्वभागे तु शोणस्योत्तर दक्षिणे ॥ गंड
क्याः पश्चिमे भागे मकरस्थो न दोषभाक् ॥ ५३ ॥ अन्यदपि ॥ मागधे गौड देशे च सिंधु देशे
च कोंकणे ॥ व्रतं चूडां विवाहं च वर्जयेन्मकरे गुरौ ॥ ५४ ॥ लुप्तवत्सरेऽपि शुभकृत्ये निषेधः ॥
अति चार गतो जीव स्तं राशिं नैति चेत्पुनः ॥ लुप्तः संवत्सरो ज्ञेयो गर्हितः सर्व कर्म्म सु ॥ ५५ ॥
गुरुः ॥ मेषे वृषे मृगे कुंभे यद्यती चारगो गुरुः ॥ न तत्र काल लोप स्स्यादित्याह भगवान्य
मः ॥ ५६ ॥ एषु मासोनार नदोषः च्यवनः ॥ मासा न्दशैकादश वा प्रभुज्य राशे र्यदा राशि मुपैति
जीवः ॥ भुक्तेन पूर्वं च पुन स्तथापि न लुप्त संवत्सर माहु रार्याः ॥ ५७ ॥ देशभेदेन परिहारः ॥ लु-
प्त संवत्सरो रेवा नर्म्मदा सुरनिम्नगा ॥ भागीरथ्या स्तयोर्न्नैवोत्तरे ऽति निषिद्धः ॥ ५८ ॥
युक्तं च ॥ लुप्ताब्द दोषो ऽत्रि मतेन मध्ये सोमोद्भवाया स्सुरनिम्नगायाः ॥ इति नारदः ॥ सप्त
हरिः गुरौ प्रयुक्ते तन्मासे तु प्रयत्नतः ॥ विवाहादि न कुर्वीत नर्म्मदा तीर उत्तरे ॥ ५९ ॥ द्वि

द्विकुल संभूत सरयू कृत संग्रहे गिरो गणो समाप्तो या नवमीयं प्रभा शुभा ॥ ६० ॥ इति श्री संग्र-
ह गिरो गणो वर्ज्य कथनं नाम नवमी प्रभा ॥ ९ ॥ अथ लग्न प्रकरणम् ॥ मेषो वृषोऽथ मि-
थुनं कर्कः सिंहोऽथ कन्यका ॥ तुलाथ वृश्चिको धन्वी मकरः कुंभ मीन कौ ॥ १॥ राश-
यस्तु क्रमादेते पुंस्त्रियौ क्रूर सौम्यकौ ॥ मेषः चर स्थिर श्चैव द्विस्व भावः क्रमात्पुनः ॥ २॥
पृष्ठोदया धनुर्मेषो मकरो वृष कर्कटौ ॥ उभयो वृषश्चान्मीन स्ततोऽन्ये मस्त कोदयाः ॥ ३॥
मेषो वृषो धनुर्युग्मं कर्क न क्रोने श्यावलः ॥ दिवा बलास्तु तेभ्योऽन्ये स्व स्व काले बलाधिकाः
॥ ४॥ अथ राशि स्वामिनः ॥ मेष वृश्चिक यो भौमः बुधो मिथुन कन्ययोः ॥ तुला वृष भयोः शु-
क्रः कर्कटस्य तु चंद्रमाः ॥ ५॥ सिंहस्याधिपतिः सूर्य्यः शनिर्मकर कुंभयोः ॥ स्यान्मीन धनु-
षोर्जीव श्चैते राशी श्वरा मताः ॥ ६ ॥ अथ उच्चानि ॥ मेषो वृष स्तथा नक्रः कन्या कर्की भ-
प तुला ॥ सूर्यादीनां क्रमादेते कथिता उच्च राशयः ॥ ७ ॥ परमोच्चांशकाः सूर्य्यादि ग्रो रामग-
जाश्विनः ॥ बाणा चंद्र शर प्रक्षेल इषाः स्वाश्वि सिताः क्रमात् ॥ ८ ॥ अथ नीचम् ॥ सूर्य्या

दीः

दीनां जगु नीचं सोच्च भाद्य च सप्तमम् ॥ राहोस्तु कन्यका गेहं मिथुन स्वोच्च भं स्मृतम् ॥
९ ॥ अथ मूल त्रिकोणम् ॥ सिंहो वृषभ मे स्वारव्यं कन्या धन्वि तुला घटा ॥ रव्या दीनां क्रमान्मू-
ल त्रिकोण राशयः स्मृताः ॥ १० ॥ अथ मेषादि लग्न कृत्यानि ॥ आकरोधातु कर्म्माणि भूमि पा-
लाभि षेचनम् ॥ निरोध स्त्राह् सं चैते मेष लग्ने प्रसिध्यति ॥ ११ ॥ क्षेत्र कूपा दिकं दानं कुमा-
री वरणं क्रमम् ॥ गृह प्रवेश उद्वाह सिद्धे वेत वृषो दये ॥ १२ ॥ कला विभूषा विज्ञानं यत्कार्यं वृष
भो दितम् ॥ तत्सर्वं मिथुने प्रोक्तं हो राशा स्त्र विचक्षणैः ॥ १३ ॥ वारि बंधन मोक्षंच पौष्टिकं
चर कर्म च ॥ वापी कूप तडा गा दीन् कर्कटे कथितं बुधैः ॥ १४ ॥ राज सेवा कृषिः पण्यं पर
यो गोव णिज्यथः ॥ सिंहे सिध्यति तत्सर्वं मेष लग्नो दितं चयत् ॥ १५ ॥ भूषणं शिल्प विज्ञा-
नं औषधं पौष्टिकं तथा ॥ चर स्थिर च यत्कृत्यं कन्या लग्ने प्रसिध्यति ॥ १६ ॥ वाणिज्यं क-
र्षणं सेवा यात्रा भांड तुला श्रयम् ॥ तुला लग्ने समाख्याता मुनि भि स्तत्व वेदिभिः ॥ १७
॥ राज सेवा भिषे कौर्य साहसं दारुणं तथा ॥ उग्रं चौर्य्यं स्थिरं कर्म्म कर्त्तव्यं नत्सारी रूपे ॥

१२ अथ नवमांशा भागाः

नवमांशाः निजतो विज्ञेयाः

| संख्या | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | मेषाः | कर्काः | तुलाः | मकराः |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशाः | ३ | ६ | १० | १३ | १६ | २० | २३ | २६ | ३० | १।५। | ४।८ | ७।३। | १०।२ |
| | २० | ४० | ०० | २० | ४० | ०० | २० | ४० | ०० | ५ | १२ | ११ | ६ |

ग्राव वसु वाणश्च राशा काः ५।७। ८। ५। ५ ॥ ३१ ॥ भुक्ते सौम्यांगिरो मंद भौमा राणांच

द्वादशांशाः स्वराशितो ज्ञेयाः

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| २ | ५ | ७ | १० | १२ | १५ | ७ | २० | २२ | २५ | २७ | ३० |
| ३० | ० | ३० | ०० | ३० | ०० | ३० | ०० | ३० | ०० | ३० | ०० |

विषम राशौ त्रिंशांशाद् मे सम राशौ त्रिंशांशाद् मे

| स्वामि | मं | श | वृ | बु | शु | शु | बु | वृ | श | म | स्वामि |
|---|---|---|---|---|---|---|---|---|---|---|---|
| अंशाः | ५ | ५ | ८ | ७ | ५ | ५ | ७ | ८ | ५ | ५ | अंशाः |

यथा क्रमात् ॥ अथ जन्मादि भाव संज्ञा ॥

तनु १ धनं २ सहोत्थारव्यं ३ सुहृद् ४ पुत्रो ५ रि ६ योषितः ७ ॥ निधनं ८ धर्म ९ कर्मा १० य ११ व्यया १२ भावास्तनो : क्रमात् ॥ ३२ ॥ केंद्रं पराणं फरं चापोक्लिमं लग्नात्तुनः पुनः ॥ नवमं पंच मस्थानं ७२

त्रिकोण स्थान मित्यपि ॥ ३३ ॥ त्रि दशै का दशं षष्ठं प्रोक्तं चोप चया ह्वयम् ॥ या मि-
त्रं सप्त मं घूनं छिद्रं च मदना ह्वयम् ॥ ३४ ॥ रिष्फं तु द्वादशं ज्ञेयं दुश्चिक्यं स्यात्तृतीयकम्
॥ चतुर स्रं तुरीयाख्य संख्यं रंध्र मथाष्टमम् ॥ ३५ ॥ अथ वर्गोत्तम नवांशाः ॥ आद्य स्त्वरे नवांश
स्स्या त्स्थि रे मध्ये तु पंचमः ॥ नवमो द्विः स्व भावाख्ये शुभो वर्गोत्तम स्त्वयम् ॥ ३६ ॥ अ-
थ साधारण शुभ कार्ये लग्न षड् वलम् ॥ सर्वेषु शुभ कार्येषु नेष्टाः खेटाः व्यया ष्टगाः ॥ लग्ने
पापा रिपो सौम्याः पापाः केंद्र त्रिकोण गाः ॥ ३७ ॥ सौम्याः केंद्र त्रिकोण स्थाः पापा
स्तु त्रिखडाय गाः ॥ ते सर्वे लाभगाः खेटाः श्रेष्ठा स्स्यु श्शुभ कर्मणि ॥ ३८ ॥ भावः
स्व पतिना सौम्यै र्दृष्टो युक्तो वलाधिकः ॥ पूर्णं फलं निजं धत्ते व्यस्तं पापै र्युते क्षितः ॥ ३९
॥ लग्ने षड्वर्ग संशुद्धे प्रोक्त स्थान स्थिते ग्रहे ॥ शुभ र्क्षे तिथि वारेषु कार्याः सर्वाः शुभाः
क्रियाः ॥ ४० ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तेयं दशमीयं प्र-
भाशुभा ॥ ४१ ॥ इति श्री संग्रह शिरोमणौ लग्न कथनं नाम दशमी प्रभा ॥ १० ॥

मु. १४

अथ मुहूर्त प्रकरणम् ॥ अथ नूतन वस्त्रालंकारादि धारणम् ॥ हस्तादि पंचके पुष्ये धनिष्ठा रेवती
द्वये ॥ चतुरे च पुनर्वस्वोः रोहिण्यां च शुभे तिथौ ॥ १॥ बुधे शुक्रे ज्य वारेषु नूतनां वर धा
रणम् ॥ सौ वर्ण रत्न रंतादि प्रवालानां च्युति प्रशुभा ॥ २॥ मागुक्र धिष्ण वारेषु स्वर्ण -
पा भरणादिकम् ॥ रक्तं वासो बुधे कार्य्यं भौम भास्कर योरपि ॥ ३॥ शुभ गाथाः विशेषः ॥ रो
हिणी गुरु पुनर्वसू त्तरे या बिभर्त्ति नव वस्त्र भूषणम् ॥ सान योपि दव लंबते पतिं स्नान गा-
धनति नारु रोपि या ॥ ४ ॥ अथात्र वार फलम् ॥ जीर्णं मर्के विधु प्रचार्द्र भौम शूके कं बुधो
धनम् ॥ गुरु ज्ञानं प्रिया वाप्ति भार्गवे मलिनं शनौ ॥ ५ ॥ कुर्वन्ते वासतत्वे ते नूतनां वर
धारणात् ॥ अथ क्षफलम् ॥ वस्त्र साप्ति र्गश्वा श्रिवन्यां भरण्यां नहि नाशनम् ॥ छत्तिकाग्नि
भयं कुर्य्यां द्रोहिण्यां सर्व संपदः ॥ ६ ॥ मृगे मूषक भीति स्या दार्द्रायां निधनं भवेत् ॥ पुन-
र्वसौ तथा पुष्ये धन धर्म्म महोत्सवाः ॥ ७ ॥ अश्लेषायां भवे च्छोको मघायां मरणं ध्रुवम्
॥ पक्षो भयंतु पूर्वायां उत्तरायां धनागमः ॥ ८ ॥ कर्म्म सिद्धि स्तु हस्त र्क्षे चित्रायामिष्ट सं-

पदः ॥ मित्र भोजन दा स्वाती विशाखा नंद दायिनी ॥ ९॥ मित्राप्तिरनुराधायां ज्येष्ठायां वास सो हृतिः ॥ जलप्लुतिश्च मूलर्क्षे पूर्वाषाढा ति रोगदा ॥ १० ॥ मिष्टान्न दोत्तरा षाढा श्रवणे नयनांतकृत् ॥ धान्यागमो धनिष्ठायां विष भीति शतभिषे ॥ ११ ॥ पूर्वाभाद्रे जला द्भीतिरुत्तरायां धनागमः ॥ रत्ना वाप्तिस्तु रेवत्यां भवेद्वस्त्र स्य धारणात् ॥ १२ ॥ अथ वस्त्राभरणादि धारणे स्त्रीणां विशेषः ॥ अश्विन्यां च धनिष्ठायां रेवत्यां कर पंचके ॥ सुवर्ण रत्न दंतादि वस्त्राणां धारणं स्त्रियः ॥ १३ ॥ अथ चूडी चक्रम् ॥ यावद्भास्कर भुक्ति भानि दिव से धिष्ण्यानि संख्या तथा ॥ वन्हि ३ भूत ५ गुण ३ अब्धि ४ सप्त ७ नयनं २ पृथ्वी १ करे २ न्दुः १ क्रमात् ॥ ॥ सूर्यारौ कविसोम्य राहु रविजाः जीवः शशी केतवः ॥ क्रूरे ऽसत्त्व शुभे शुभश्च कथितं चक्रे करे भूषणे ॥ सूर्यभात् चूडी चक्रम् ॥ ॥ १४ ॥ अथ कज्जला दर्श कल्पम् ॥ चित्रा चतुष्टयेऽश्विन्यां धनिष्ठा रेवती मृगे ॥ शुक्रे ऽर्केन्दि प्रानो स्त्रीणां दर्प्य

| ३ | ५ | ३ | ४ | ७ | २ | १ | २ | १ |
|---|---|---|---|---|---|---|---|---|
| सू | मं | शु | बु | रा | श | इ | चं | के |

णां जनयोर्द्धृतिः ॥ १५ ॥ अथनवस्त्र विकृतो फलम् ॥ वास सो नवधा भागे चतुः कोणेषु देव-
ताः ॥ मध्य त्र्यंशा स्थितं रक्षो नराः पार्श्व द्वयांशयोः ॥ १६ ॥ दग्धे जीर्णे नवे वस्त्रे लि-
प्ते वा कर्दमादिभिः ॥ सर्वं प्रति व्यसत् चैव शय नाशान पादुके ॥ १७ ॥ कज्जल क-
र्दम गो मय लिप्ते वाससि दग्ध वति स्फुटिते च ॥ चिंत्य मिदं नवधा विहिते तन्निष्ट सनि-
ष्ट फलं च सुधीभिः ॥ १८ ॥ शंख चक्रा बुज च्छत्र ध्वज तोरण सन्निभा ॥ श्री वत्स स-
र्वतो भद्र नंद्या वर्त्त रत्नोपमा ॥ १९ ॥ वर्द्ध मान स्वस्ति का भस्मगा कूर्म्म रूपा कृतिः ॥
छेदा कृति दैत्य भागे ऽप्यायुरर्थं प्रदा नृणाम् ॥ २० ॥ खरोष्ट्रो लूक का कादि जंबू कव्यद्व-
को पमाः ॥ त्रिकोण सूर्प्या कृतयो देव भागेप्य शोभनाः ॥ २१ ॥ निंदितं वसनं दद्या द्वि-
जेभ्यः स्वर्ण संयुतम् ॥ आशिषो वाचनं कृत्वा त्वन्य वस्त्रं च धारयेत् ॥ २२ ॥ अथ मुहू-
र्त्तं विनापि वस्त्र धारणम् ॥ विप्रा ज्ञया तथो द्वाहे राज्ञा प्रीत्या र्पितं च यत् ॥ निंद्ये ऽपि धिष्ण्ये
वा रादौ वस्त्रं धार्य्यं जगुर्बुधाः ॥ २३ ॥ अथ वस्त्र विशेष विशेषः ॥ शुक्ल वस्त्रोक्त मे धार्य्यं र-

शि॰ वौ शुक्रे गुरौ बुधे ॥ विशुक्रे कर्बुरं पीतं सभौमे रक्तमं वरम् ॥ २५॥ अथ कृष्णनीलम् ॥
७७ पुनर्वसू धनिष्ठाश्व्ये ऽश्विभे हस्ताच्चतुष्टये ॥ पूर्वोत्तरे शनौ सूर्ये कृष्ण नीलं वरं शुभम्
॥ २६ ॥ अथ दुकूलम् ॥ जीवे ऽर्के ऽब्जे बुधे शुक्रे वस्त्रोक्त र्क्षे श्रवान्विते ॥ स्थिरे गे सद्गृहे युं-
क्ते यद्दुकूलस्य धारणम् ॥ २७ ॥ अथ कौशेयम् ॥ अश्विनी रेवती हस्ते रोहिण्यां श्रवणत्रये
॥ पूर्वोत्तरे पुनर्वस्वोः स्वातौ पुष्ये मघाभिधे ॥ २८॥ रवौ चंद्रे गुरौ धार्य्यं कौशेय वसनं जनैः
॥ अथ रोमजं वस्त्रम् ॥ नील वस्त्रोदिते धिष्ण्ये रेवती पुष्ययो रपि ॥ शुक्रे शनै भ्वारे ऽर्के च धार
ये रोमजां वरम् ॥ २९॥ अथ सतूलकंचुक धारणम् ॥ पुष्यो मृगानुरा धांत्ये धनिष्ठाश्वि कर त्रये॥
रोहिण्यां गुरु शुक्रा ब्जे देहे दुर्गा धातिः शुभा ॥ ३०॥ अथ स्वर्णरजत तंतुमय वस्त्र परिधानम्॥
सुवर्ण तंतु संमिश्रं धारणं च रवौ कुजे ॥ रजत तंतु शुक्रे ऽब्जे वस्त्र धारण मे शुभम् ॥ ३१
॥ अथ वस्त्रनिर्माणम् ॥ रोहिणी रेवती चित्रा नुराधान्त्या भोत्तरे ॥ शनि हित्वा विदध्यात्तु तंतु-
भिः पटसाधनम् ॥ ३२॥ अथ कुसुंभादौ वस्त्र रंजनम् ॥ पुनर्वसू द्वये हस्ता स्यंच के श्रवण द्व-

सं.चि. ये ॥ त्वाश्विभे ऽर्के कवीज्या रेवास संरंजनं सुभम् ॥ ३३ ॥ अथ सूची कर्म ॥ स्वाश्विन्यानु
७८ राधाश्विसुष्यां तं रेवती करः ॥ ज्येष्ठा सद्दा सरा स्सार्काः सूची कर्म्मणि सस्मृताः ॥ ३४ ॥
अथ वस्त्रक्षालनम् ॥ पुनर्वसु द्वये ऽश्विन्यां धनिष्ठा हस्त पंचके ॥ हित्वा कार्कि बुधान् रि-
क्तां षष्ठीं श्राद्ध दिनं तथा ॥ ३५ ॥ व्रतं पर्वंच वस्त्राणि क्षालयेद्रज का दिना ॥ ३५ ॥ अथो
पानत्परि धानं चर्म्म कृत्यंच ॥ चित्रा पूर्वानुराधार्द्रा ज्येष्ठा श्लेषा मघा मृगे ॥ विशाखा कृत्ति
का मूले रेवत्यां चार्कि सूर्य्ययोः ॥ ३६ ॥ उपानत्परिधानंच चर्म्म कर्म्मापि सस्यते ॥ अथ
वितान तूलिकोपधानादि निर्म्माणम् ॥ कुर्य्याद्रस्त्रोदिते थिले तूलिका सुप धान कम् ॥ विताना
धंच वभ्रीयान् ऊर्द्ध मूर्द्ध मुखोडुषु ॥ अथ वस्त्र मय गेह निर्म्माणम् ॥ श्रुति त्रये ऽश्विनी पुष्ये
ऽनुराधा रोहिणी मृगे ॥ हस्त त्रये पुनर्वस्व्ये ऽन्त्ये न्यसेत्पट वेश्म सत् ॥ ३९ ॥ अथ सुगंध भो-
गः ॥ श्रुति त्रये ऽश्विनी पुष्ये पूर्वाषाढानुराधयोः ॥ हस्त त्रये पुनर्वस्व्ये ऽन्त्ये स्त्रग सेवनं शु
भे ह्वनि ॥ ४० ॥ चंद नागरु कस्तूरी पुष्पाणां धारणं शुभम् ॥ अथ शय्या रंभः ॥ ७१

रि रोहिणी चोत्तरा स्तेया मूल पुष्य पुनर्वसू ॥ अनुराधाश्विनी प्रस्ता खड्ग निर्म्माण कर्म्मणि
२५ ॥ ४२॥ शुभे योगे शुभे वारे विदध्या त्खड्ग कां नरः ॥ मृत्युसूते राध्य स्तेया स्वद्गामा विशि-
चैवतो ॥ ४३॥ पितृ पक्षे विशेषेण यत्नानां नरि वर्जयेत् ॥ श्रावणे चैव पौषेच भाद्रे मा
स्य शुभे दिनि ॥ ४४॥ वर्ज्जयेद्धीम मंदस्य खड्ग निर्म्माण कर्म्मणि ॥ सूर्य्य क्षाचु चतुष्कंच
देयं धिसंतु मस्तके ॥ ४५॥ कोण यो रष्ट नक्षत्रं प्राख्याया नष्ट संख्य कम् ॥ खड्ग मध्ये त्रि-
कं चैव वेद संख्यान्च पार्श्वयोः ॥ ४६॥ मूल्यं खड्ग फलं चक्रे वाणसेण च भाषितम् ॥ मस्तके
च शुभं ज्ञेयं कोण यो रष्ट मृत्युदम् ॥ ४७ ॥ प्रारब्धाष्टकं शुभं प्रोक्तं त्रिकं मध्ये सुख मद
म ॥ पार्श्वेषु वेद नक्षत्रं हानि मृत्यु भय मदम् ॥ ४८॥ सूर्य्य भा द्दिन भं गणयं खड्ग चक्रे
विशेषतः ॥ अथ पादुकाधारणादि आरंभः ॥ मैत्रेन्दु पुष्य यम भादिति वह्नि चित्रा हस्तोत्तरा त्रय
हरीज्य विधातृ भानि ॥ एते व्वती व्यय नाशन पादुकानां संभोग कार्य्य मुदितं मुनिभि-
रशुभाह्ने ॥ ४९ ॥ अथ भूषाघटनम् ॥ त्रिपुष्करा भिधे योगे त्र्युत्तरे रेवती द्वये॥ श्रुतित्रये मृगेषु ७९

ष्ये पुनर्वस्वनुराधयोः ॥ हस्तत्रयेऽथ रोहिण्यां भूषा कार्य्या शुभे ह्यनि ॥ ५० ॥ अथ रत्न
युक्त भूषा घट्टनम् ॥ कृत्तिकादि त्रये हस्त पंचके रेवती द्वये ॥ श्रुति त्रये पुनर्वस्वोः पुष्य भे चो-
त्तरा त्रये ॥ ५१ ॥ कुजेऽर्के रत्नयुक्त भूषा घट्टनं शुभ वासरे ॥ अथ रौप्य मय वज्र मुक्त भूषण
निर्म्माणम् ॥ रत्न युक्त भूषणे त्वर्क्षे विज्ञेया कान्तिकां विना ॥ ५२ ॥ शुक्रेऽब्जे भूषणं रौप्यं
वज्रं मुक्ता मयं हि सत् ॥ अथ पात्र भोजनम् ॥ अथातः संप्रवक्ष्यामि यदुक्तं शक्ति यामले ॥ सू-
र्य्य भाच्चंद्र पर्य्यन्तं गणनीयं सदा बुधैः ॥ ५३ ॥ दिक्षु दिक्षु द्वयं न्यस्य मध्ये का दशयो ज-
पेत् ॥ वर्तुला कार चक्रस्य भोक्तृ पात्रस्य निर्णयः ॥ ५४ ॥ बंधनं सौख्य हानिस्स्याल्ला-
भं सौख्यं च मृत्युदम् ॥ पुत्रा पुत्र शोक पत्नी च पूर्वादि क्रमतो भवेत् ॥ ५५ ॥ त्वरक्तानक्षे-
त्तु पत्नी च विलोस्सुतं विवर्जयेत् ॥ रोहिणी युगले हस्त त्रितये रेवती द्वये ॥ ५६ ॥ श्रव-
ण त्रितये पुष्ये पुनर्वस्व नुराधयोः ॥ उत्तरे बुध शुक्रेऽब्जे वारे चामृत योगके ॥ ५७ ॥
सौवर्ण रौप्य पात्रेषु भोजनादि शुभ प्रदम् ॥ अथ श्मश्रु कर्म्म ॥ श्रवण त्रितये हस्त त्रितये रे-

चि. वती द्वये ॥ ज्येष्ठायां मृग शीर्षे च पुनर्वसु द्वये तथा ॥ ५८ ॥ क्षुरकर्म्म बुधैः प्रोक्तं त्यक्त्वा भौ-
८१ म शनिं रविम् ॥ अनुराधा सुफां चैव कृत्तिकां रोहिणीं मघां ॥ ५९ ॥ अथ क्षुर कृत्ये वारफल
म् ॥ भानु र्मासे शनिः सप्त भौमो ऽष्टौ नाशये त्सुखम् ॥ वर्द्धये द्दोधनः पंच मासा न्सप्तनि
घ्ण पतिः ॥ ६० ॥ शुक्र स्त्वेकादश क्षेमं क्षौरे वाचां पति र्दश ॥ अथ क्षौरे त्याज्य तिथिः ॥ अ-
ष्टमी भूति पत्पष्ठी त्यक्त्वा पर्वाणि संत्यजेत् ॥ चतुर्दशीत्वमावास्या क्षौरे त्याज्यातु सर्वदा ॥
६१ ॥ निंघ नक्षत्राणां दुष्ट फलम् ॥ पंच कृत्वो मघायांयः षट् कृत्वः कृतिका स्वपि ॥ त्रिवारं
चानुराधायां रोहिण्या मष्ट वार कम् ॥ ६२ ॥ उत्तरा फाल्गुनी संज्ञे चतुर्थे क्षौरमाचरे
त् ॥ सवेध सास मानोऽपि यावद्वर्षं न जीवति ॥ ६३ ॥ अथ क्षौर निषेधे ऽपि तद पवादः ॥ ग्रा
च्य यावि प्र राज्ञो र्व्याधाने वंध मोक्षणे ॥ मृताशौचेच दीक्षायां मुंडनं प्रस्त मेष्वपि ॥
६४ ॥ मुंडनं चोपवासश्च सर्व तीर्थेष्वयं विधिः ॥ वर्ज्जयित्वाकुरु क्षेत्रं नैमिषं पुष्करं गयाम्
॥ ६५ ॥ अथ राज्ञां श्मश्रु कर्म्म ॥ क्षौर म स्यो दये राज्ञः पंच मे पंचमे दिनि ॥ श्मश्रु कर्म्म त ८१

माख्यातं निषिद्धा तारका न चेत् ॥ ६६ ॥ अथ नख दंत कर्तं ॥ स्वर्क्षेसु क्षौर कार्याणि येषु
येषु मनीषिभिः ॥ तेषु तेषु च कर्तव्या नख दंतादि का क्रिया ॥ ६७ ॥ अथ क्षौर विधौ निषेधः
॥ भुक्ता भ्यक्तो व्रती यात्रा रणे द्योगी कृताह्निकः ॥ उत्कटा चरणो रात्रौ संध्य योरुभयोरपि
॥ ६८ ॥ श्राद्धे सु नवमे चाह्नि क्षुर कर्म न कारयेत् ॥ प्राक् व्रत स्नान को राजा योगी स्त्री
गर्भिणी पतिः ॥ ६९ ॥ सजीवत्पितृ कश्चैते मुंडाः प्राक् कथिता अपि ॥ ७० ॥ क्षौरे शुभ वा
स्यम् ॥ केशवं चानन्तपुरं पाटलपुत्रं पुरी महि क्षवम् ॥ दिति मदितिं च स्मरतां क्षौर विधौ
भवति कल्याणम् ॥ ७१ ॥ अथ क्षौरे किंचिद्विशेषः ॥ गंगायां भास्कर क्षेत्रे माता पित्रोर्मृते ह
नि ॥ आधाने सोम पाने च षट् सु क्षौरं विधीयते ॥ ७२ ॥ राज कार्य्य नियुक्तानां नटानां नृ
प जीविनाम् ॥ श्मश्रु रोम नख च्छेदे नास्ति काल विशोधनम् ॥ ७३ ॥ अथ विद्यारंभः ॥ मृ
गादि पंचके मूले हस्तादि त्रितये ऽश्विभे ॥ श्रवण त्रय पूर्वा सु विद्या रंभः प्रशस्यते ॥ ७४
॥ रवौ शुक्रे बुधे जीवे वारे लग्न बले शुभे ॥ दशम्यादि त्रिके षष्ठी तृतीया पंचमी शुच ॥ ७५ ८२

॥ विद्या रम्भा गुरौ शुक्रे बुधे सर्वार्थ सिद्धिदः ॥ मध्यो ऽकौजाड्य कृच्चंद्रो भौमार्की मृत्युदौ स्मृ-
तौ ॥ ७६ ॥ अथ गणिता रंभः ॥ श्रात द्वये ऽनु राधा र्द्रे रोहिणी रेवती करे ॥ पुष्ये जीवे बुधे कुर्य्या
दारंभं गणिता दिषु ॥ ७७ ॥ अथ व्याकरणा रंभः ॥ रोहिण्यां पंच के हस्ता त्पुनर्भे मृग भे ऽ
श्विभे ॥ पुष्ये शुक्रेज्य विद्गुरे शब्द शास्त्रं पठेत्सुधीः ॥ ७८ ॥ अथ न्याय शास्त्राद्यारंभः ॥ अनु-
रे रोहिणी पुष्ये पुनर्भे श्रवणे करे ॥ अश्विन्यां श्रात भे स्वातौ न्याय शास्त्रादिकं पठेत् ॥ ७९
॥ अथ धर्म्म शास्त्र पुराणा रंभः ॥ हस्तादि पंच के पुष्ये रेवती द्वितये मृगे ॥ श्रवत्रये शुभा रंभो ध-
र्म्म शास्त्र पुराणयोः ॥ ८० ॥ अथ वैद्य विद्या गारुडी विद्या रंभः ॥ हस्त त्रये ऽनुराधायां पुनर्भे श्रव-
ण त्रये ॥ मूले चैवा श्विनी पुष्ये ज्येष्ठा श्लेषार्द्र भे मृगे ॥ ८१ ॥ अथ जैन विद्या रम्भः ॥ श्रुति-
त्रये मघा पूर्वा नुराधा रेवती त्रये ॥ पुनर्भे स्वाति भे सूर्य्ये शुक्रे जैना गमं पठेत् ॥ ८२ ॥ अथ
लिंगाङ्ग छेदन मुहूर्त्तम् ॥ नराश्व वृष भा दीनां लिंगाङ्ग छेदनं स्मृतम् ॥ आर्कार्द्र ज्यांत्य पुष्यार्के
स्वातीन्दु श्रुति वासवैः ॥ ८३ ॥ लिंगाङ्ग छेदो नरस्यार्स वर्गे त्यक्ता स्व मार्कास्त महीन घस्रे ॥

मु० चि० शारेज्या र्क्षे पौसन पुष्यार्क हस्ते श्रोत्रेन्दु त्रविष्ठा प्रदिष्टा ॥ ८४ ॥ अथ नष्ट तारीयः ॥ तृतीया लेप
८४ वारस्सी दिग्व संख्या तथा सान्द्यो ऽथ त्रयो विंशतिश्च ॥ तथैवाष्टविंशत्तरी या निषिद्धा स-
दायाव नैनष्टास्त्र विद्भिः प्रदिष्टा ॥ ८५ ॥ अथ पारसी विद्यारंभः ॥ ज्येष्ठाश्लेषा मघा पूर्वा रेव-
ती भरणी वुधे ॥ विशाखार्द्रोत्तरा षाढा मूल भे पाप वासरे ॥ ८६ ॥ लग्ने स्थिरे च चन्द्रे-
न पारसी ना रवी पठेत् ॥ अथलिप्यारंभः ॥ शुभे तिथौ शुभे वारे रेवती युगले तथा ॥ ८७ ॥
श्रवणे चानुराधायां नये चार्द्रादि सुत्रिसु ॥ हस्तादि त्रितये कुर्य्या ल्लिखनारंभनं सुधीः ॥
८८ ॥ अथ रत्न परीक्षा ॥ पुन र्भे प्रात हस्त र्क्षे श्रवे ज्येष्ठे परीक्षणम् ॥ रत्नानामष्टमी भूतं हित्वा
भौमं प्रशने श्चरम् ॥ ८९ ॥ अथ शिल्पकर्म्मारंभः ॥ हस्त त्रये श्रवात् द्व्यर्क्षे उत्तरे रोहिणी मृ-
गे ॥ रेवत्या मश्विनी पुष्ये पुनर्वस्व नुराधयोः ॥ ९० ॥ शस्ते विधौ शुभे वारे शिल्प विद्यां स-
मा चरेत् ॥ अथ राज दर्शनम् ॥ उत्तरे श्रवण द्वन्द्वे मृगे पुष्या नुराधयोः ॥ ९१ ॥ रोहिण्यां रेव-
ती युग्मे चित्रा हस्ते शुभे दिनि ॥ वलिन्यर्के ऽर्क वारे ऽपि राज दर्शन मीरितम् ॥ ९२ ॥ अथ-

सं मि राज सेवा ॥ हस्तद्वये ऽनुराधायां रेवती युगले ध्रुवे ॥ पुष्ये बुधे गुरौ शुक्रे सार्त्तियो रवि वासरे ॥
८५ ९३ ॥ योनि राशिप यो मैत्र्यां स्वामी सेव्यो ऽनुजीविभिः ॥ अथ दास दासी संग्रहः ॥ उत्तरा सु-
च रोहिण्यां दास दास्यादि संग्रहः ॥ ९४ ॥ अथ क्षत्र चामर सिंहासनादि कृत्यम् ॥ चामर क्षत्र
दोलादि दीर्घ सिंहासनादिकम् ॥ पट्टाभिषेक के सर्वं विदध्याच्छोभने हनि ॥ ९५ ॥
अथ मुद्रा कृत्यम् ॥ मृदु ध्रुव क्षिप्र चरेषु भेषु योगे प्रशस्ते शनि चंद्र वर्ज्ये ॥ वारे तिथौ पू-
र्णा जयाह्न येन्न मुद्रा प्रतिष्ठा शुभ दान रूपम् ॥ ९६ ॥ गुर्वस्तेवा शितास्ते वा मुद्राणां
ग्रहणं क्वचित् ॥ क्रूर ग्रह स्पर्श लग्ने न कार्य्यं भूति मिच्छता ॥ ९७ ॥ अथाश्वारोहणम् गजा-
नांच ॥ पुष्य श्रविष्ठाश्विनि सौम्य भेषु पौष्णा न लादित्य कराह्न येषु ॥ सवारुणा र्क्षे षु बुधैः
स्स्मृतानि सवारीं कार्य्याणि तुरंग मानाम् ॥ ९८ ॥ अथाश्वारोहणे चक्रम् ॥ अश्वाकारं लि-
खेच्चक्रं साभिजिद्भानि विन्यसेत् ॥ स्कंधे तु सूर्य्य भात्यंच पृष्ठे च दश भानि च ॥ ९९ ॥ पु-
च्छे द्वे स्यापये त्त्वाद्व स्वतुः पादे चतुष्टयम् ॥ उदरे विन्य से त्त्यंच मुखे द्वे तुरगस्य च ॥ १०० ८५

॥ अर्थ लाभो मुखे सम्यक् वाजी नश्यति चोदरे ॥ चरणे स्थैरणे भंगः पुच्छे पत्नी विनश्य-
ति ॥ २ ॥ अर्थ सिद्धि भवेत् पृष्ठे स्कन्धे युद्धे पतिर्भवेत् ॥ अथ गज कृत्यम् ॥ हस्त त्रये सौम्य ह-
रि त्रये च पौष्ण द्वये पुष्य पुनर्वसोश्च ॥ मैत्रे च सर्वाण्यपि कुंजराणां कर्माणि शस्तान्य खि-
लानि यानि ॥ २ ॥ अथ द्विप विकारो तुलं कृत्यं च ॥ उत्तरा रेवती युग्मे त्रिभे हस्ता त्रिभे श्रवात् ॥ पु-
नर्वस्वो स्तथा पुष्ये ऽनुराधा त्रितये मृगे ॥ ३ ॥ रोहिण्यां पितृ काया स्तु सल्लग्ने घट्टनं शुभम्
॥ शुभ वारे शुभे लग्ने शुभांशे शोभने दिने ॥ ४ ॥ अंकुशा करणं योग्यं शाने लग्ने शाने
दिने ॥ गजस्य पल्याण निर्म्माणम् ॥ श्रवणे शत भे हस्ते पुष्ये मूले मृगे ऽश्विभे ॥ पुनर्वस्वो गंजा
श्वो श्च पल्याण करणं शुभम् ॥ ५ ॥ वर्ज्जयित्वा कुजं नष्ट्वा मन्दं च कार्य्यं शुभावहम् ॥
अथाश्वस्य विशेष कृत्यम् ॥ चौलो क्त खुर कृत्यादि शिक्षा विद्योक्त भादिषु ग्रास घासादिकं त्वन्न
प्राशनोक्त र्क्षे गज वाजिनाम् ॥ ६ ॥ अथ रथ कृत्यम् ॥ पुष्यो पुनर्वसू ज्येष्ठा नुराधा रेवती द्वये ॥
श्रवणादि त्रिभे हस्त त्रितये रोहिणी मृगे ॥ ७ ॥ सार्के सौम्य दिने सौम्य विलग्ने रथ कर्म्मसत्

|| अथ संधिः धन्नूणां || अनुराधा मघा पुष्ये तिष्य ईंते तिला भिधे || लग्ने शहदि गेऽष्टम्यां
सूदश्यां संधि रिष्यते || ८ || अथ मद्यारंभः || मूलार्द्रा स्वात भेज्ये ष्ठा पूर्वा श्लेषा मघासु च
|| भरण्यां क्रूर वारे च मद्य कर्मे रितं वुधैः || ९ || अथ मादक वस्तुभक्षणम् || आर्द्रा श्लेषा म
घा पूर्वा ज्येष्ठा मूल स्वाता भिधे || भरण्यां सुदिने मंदे त्व फीचा न्ना दकं मधु || १० || अथ न-
वांग नाभोगः || अथमाभि गम प्रशस्ता नव वध्वा शुभे हानि || गर्भा धानोक्त नक्षत्रे शस्ते
ज्योत्स्ना करे निशि || ११ || अथ गीत नृत्यारंभः || रेवत्या मनुराधायां धनिष्ठा द्वितये करे ||
रोहिणी युगले पुष्ये त्र्युत्तरे गीत नर्तनम् || १२ || अथ नट क्रिया || मृगा द्रौ रोहिणी पुष्ये पुन
र्भे श्रवण त्रये || चित्रा त्रयोत्तरा मूले कृत्य सन्नृत्य जीविनाम् || १३ || अथ वृक्षलतादि रोप-
णम् || हस्त चित्रोत्तरा मूले ऽनुराधा रेवती सुये || विशाखा रोहिणी पुष्ये स्वाती सौम्ये मृग-
पर्ते || १४ || सूर्य भाद्दिन पर्य्यंतं राम रामाश्वि युग्मभं || राम भूवाण षट् युग्म चक्रे पाद
पदे पदे || १५ || मास चक्षुभ मस हानि शुभं दुःखं रिपो भयं || शुभं सौख्यं क्रमात् ज्ञेयं

फल मुक्तं विच क्षणैः ॥ १६ ॥ तिथि वार समा युक्तं सूर्य्य भा द्दिन भं श्रुतम् ॥ नव भिस्त्व हरे
द्भागं शेषांके न फलं दिशेत् ॥ १७ ॥ एके शरे चतुः केच त्र केच फल मादिशेत् ॥ व-
न्धो पस्र द्वये लाभं सप्त मे नव मे स्मृतिः ॥ १८ ॥ अथनौकाघट्टनम् ॥ अश्वि करेज्य सुधानिधि पू-
र्वामित्र धनाच्युतभे शुभ लग्ने ॥ तारक योग तिथीन्दु विशुद्धौ नौ गमनं शुभदं शुभवारे ॥
१९ ॥ अथसामान्यतः पशु कृत्यं रक्षाच ॥ त्यक्ता षष्ठी ममां रिक्तां रोहिणी मुत्तरा त्रयम् ॥ चित्रा-
स्वंश्रवणं भौमं पशूनां सर्व कर्म्मच ॥ २० ॥ प्रवेश निर्ग मौ चापि न त्याज्यं निजयो निभम्
॥ पूर्वा त्रये धनिष्ठेन्द्र पौष्णे सौम्य विशाखयोः ॥ अश्लेषा या मघा श्विन्यां यात्रा सिद्धि श्च-
तुः पदाम् ॥ २१ ॥ अथचरणी चक्रम् ॥ व्यामं विस्तीर्ण संगुणयं मस्तुना साक्षैर्य्युतम् ॥ अष्ट
भिस्तु हरे द्भागं शेषां के फल मादिशेत् ॥ २२ ॥ पश्यो र्हानिः पशो र्नाशः पशु लाभः पशु
क्षयः ॥ पशु रोगःपशो र्वृद्धिः पशु भेदःपशो र्वधः ॥ २३ ॥ अथोष्ट्र महिष्यादि कृत्यम् ॥ धनिष्ठा द्वि
नये पूर्वा यादा तिर्य्यङ्मुखोडुषु ॥ अजा वि महि षोष्ट्राणां कृत्यं चाश्वतरी शुभा ॥ २४ ॥ ८८

सं.नि. ॥ अथ वनचारिकृत्यम् ॥ ज्येष्ठा स्वात्यश्विनी पुष्ये पुनर्भे रोहिणी करे ॥ उत्तरासु शुभं कृत्यं शृं-
८८ गिणां वनचारिणाम् ॥ २५ ॥ अथ पक्षीकृत्यम् ॥ शुभा हे सुखो तिर्य्यङ्मुखे चोर्द्ध्वमुखे च भे
॥ सारिका शुकमुख्यानां पक्षिणां कृत्यमुत्तमम् ॥ २६ ॥ अथ सर्ववस्तुविक्रयः ॥ विशाखा कृ-
त्तिका श्लेषा भरणी पूर्विका त्रयम् ॥ विक्रयः सति या वेषु कर्त्तव्यो न क्रयश्शुभः ॥ २७ ॥
अथ गृहक्षेत्रभूम्यादीनां क्रयविक्रयौ ॥ जीवे शुक्रे च नंदासु पूर्णायां मूलभे मृगे ॥ पूर्वाश्लेषा मघा-
स्त्वेव विशाखाद्वितये तथा ॥ २८ ॥ पुनर्भे मुनिभिः प्रोक्तं क्रयविक्रयणं भुवः ॥ अथ वाणिज्य-
म् ॥ अनुराधोत्तरा पुष्ये रेवती रोहिणी मृगे ॥ हस्तचित्राश्विभे कुर्य्याद् वाणिज्यं दिवसे शुभे-
॥ २९ ॥ अथ निधिद्रव्यादिवृद्धिसंग्रहे ॥ पुष्ये मृगेऽनुराधायां श्रवणत्रितये श्विभे ॥ पुनर्भेऽन्त्ये-
विशाखायां निधेर्वृद्धिश्च संग्रहः ॥ ३० ॥ अथ द्रव्यादीनां गुप्तस्थाने स्थापनम् ॥ धनिष्ठोफावि-
शाखाख्ये पूर्वाषाढाभिधे त्वभे ॥ रोहिण्यां च निधेर्भूमौ स्थापनं शुभमीरितम् ॥ ३१ ॥
अथ द्रव्यप्रयोगः ॥ श्रवणादित्रिभे चित्राचतुष्के रेवतीद्वये ॥ पुनर्वसौ मृगे पुष्ये शुभो द्रव्यप्र- ८४

सं०टि० योगकः ॥ ३२॥ संक्रांतौ वृद्धि योगेतु हस्तर्क्षे रवि भौमयोः ॥ नच ग्राह्यं ऋणं यस्मात्तद्वंशे

६० सुस्थिरं भवेत् ॥ ३३॥ ऋणं भौमे न गृह्णीयान्न देयं बुधवासरे ॥ ऋणच्छेदं कुजे कुर्यात्सं-

चयं सोमनन्दने ॥ ३४ ॥ अथ धान्य विक्रयः ॥ रोहिण्या सल्कयोऽन्त्यस्य धनिष्ठा सत भौत्तरे ॥ ऋ-

य रस संग्रहः ॥ रस संग्रहणं श्रेष्ठं तोया रंभो दितो त्रुषु ॥ ३५॥ अथ स्वार्थ धान्य प्रयोगः ॥ विशाखा

रोहिणी ज्येष्ठा पुनर्भौश्विप्रात त्रये ॥ त्र्युत्तरे स्वाति पुष्ये तु धान्य वृद्धि प्रभु भेरिता ॥ ३६ ॥

अथ गृहाच्छादनम् ॥ हस्त त्रये धात युगे सराधा घस्रादि योगो गृह गोपनं च ॥ नंदां परित्यज्य कु-

हूंच ऋतांभौ मार्कजादित्य दिनाश्च निंद्याः ३७ अथ हल प्रवाहः ॥ रवौ रौद्रादि पादस्थे भूमौ संजा-

यते रजः ॥ तस्मा द्दिनत्रयं तत्र बीज वापन कारयेत् ॥ ३८ ॥ अरकाष्टमी विष्टि पुनः चंद्रे क्षीरोत्तु

रा रार्कज वासरे षु ॥ दिनक्षये वानिधि संध्ययो र्वा कृता कृषी पूर्व धनानि हन्ति ॥ ३९ ॥ पुन

र्वसू द्वये मूले त्र्युत्तरे रोहिणी द्वये ॥ हस्त त्रयेऽनुराधायां रेवत्यां श्रवण त्रये ॥ ४० ॥ तिथौ

वारे शुभेऽश्विन्यां हल प्रवहणं शुभम् ॥ अथ हलचक्रम् ॥ त्रिभि स्त्रिभि स्त्रिभिः पंच त्रि- १३

भिः पंच त्रिभिर्द्वयम् ॥ सूर्य्यभाद्दिनभं यावद्धानि वाह्यी हले क्रमात् ॥ ४१॥ अथ वीजोप्तिः ॥
हस्ताश्विपुष्योत्तर रोहिणीषु चित्रानुराधा श्रुतिरेवतीषु ॥ स्वातौ धनिष्ठाच मघाच मूले वी-
जोप्तिरुक्ता सुफला प्रदिष्टा ॥ ४२ ॥ शुभेवारे तिथौ श्रेष्ठा वीजोप्तिस्त्वथ राहुभात् ॥ अथ्या-
(चक्रमुक्ते लग्न)
ग्नौ त्रुत्रयं चैकं त्रयं द्वित्रिचतुष्टयम् ॥ ४३ ॥ अशुभं च शुभं ज्ञेयं दिनसंस्पर्शि चक्रभे ॥
अथ शस्यारोपणम् ॥ हस्तत्रयोत्तरा मूले धनिष्ठा रोहिणी मृगे ॥ पुष्ये मृगेऽनुराधांत्ये म-
घायां शुभवासरे ॥ ४४ ॥ त्यक्त्वा ऋक्षाणि भौमं शस्यस्यांकुररोपणम् ॥ अथ शस्यादेः
अथ धान्यच्छिदा ॥ पूर्वोत्तरा मघाश्लेषा ज्येष्ठार्द्रा श्रवणद्वये ॥ भरणी द्वितये मूले मृगे पुष्ये
कर त्रये ॥ ४५ ॥ धान्यच्छिदा शुभा ऋक्षा हित्वा भौमशनैश्चरौ ॥ अथ कणमर्दनम् ॥ अनु-
राधा श्रवे मूले रेवत्यांच मृगे त्रिभे ॥ ज्येष्ठायां चैव रोहिण्यां शुभं स्यात्कणमर्दनम् ॥
४६ ॥ अथ धान्यानयनं फलपुष्पोच्चारणंच ॥ रोपणोदित नक्षत्रे वासरे मान्दिरे वृषेः ॥ अन्नस्या-
नयनं पुष्प फला द्युत्तारणंच सत् ॥ ४७ ॥ अथान्नादिपाकक्रिया ॥ मूलं चित्रानुराधासु विशा-

शि स्वा कृत्तिका मृगे ॥ उत्तरा रोहिणी ज्येष्ठा रेवतीषु पवित्रिका ॥ ४८ ॥ सत्यक्तांतु धरंस्त्यनं
८२ पसु रंध्र तिथिं शुभम् ॥ अथ नवान्नप्राशनम् ॥ हस्त चित्रा नुराधा स्वे रोहिणी श्रवण द्वये
॥ मृगाश्विन्युत्तरा स्वे शुभेवारे तिथावपि ॥ ४९ ॥ नवान्नस्य विधानं च गमनं फ-
लमूलयोः ॥ अथ नवान्न चक्रम् ॥ बुधर्क्षात्युत्र ५ पुत्रे ५ सु ५ पुत्र ५ वेद ४ युगे २ न्दु १ क
म् ॥ सच्छुभं शुभमर्घं च शुभं व्यर्थं शुभं क्रमात् ॥ ५० ॥ विना नंदां विषघटी मधुपो-
पार्कं भूमि जान् ॥ अथ कोष्ठादौ धान्य स्थितिः ॥ पुनर्भे द्वयपौर्वे त्ये नुराधा श्रवण त्रये ॥
हस्तत्रये ऽश्विनी पुष्ये रोहिण्या मुत्तरा त्रये ॥ ५१ ॥ गुरौ शुक्रे रवौ सौम्ये स्त्त कोष्ठादौ धान्यर-
क्षणम् ॥ सूर्यभादग्नि वेदेषु वसु वेदाग्नि षु क्रमात् ॥ शुभा शुभं क्रमाज्ज्ञेयं कोष्ठादौ
धान्य रक्षणे ॥ ५२ ॥ अथ बीज संग्रहः ॥ हस्त त्रये पुनर्वस्वोः रोहिण्यां श्रवण द्वये ॥ स्थिरे लग्ने
शुभे वारे विवं [illegible] बीज संग्रहः ॥ ५३ ॥ अथ रज्जुभिर्धान्यबंधनम् ॥ स्वातौ मूले च हस्ते त्वेभा-
द्या पाद द्वये मृगे ॥ रोहिण्यां [illegible] कोष्ठान्तर्धान्य संरक्षणं शुभम् ॥ ५४ ॥ अथोरवल मुसल चक्रम् ८२

| शनेः पूर्वाषाढ उत्तराषाढ अभि० श्रव० | | | | | |
|---|---|---|---|---|---|
| ग्रह | वर्ष | मास | दिन | घटी | फल |
| शनि | ० | ११ | ३ | २० | अशुभ |
| गुरु | १ | ९ | ३ | ० | शुभ |
| राहु | १ | १ | १० | ० | अशुभ |
| शुक्र | १ | ११ | १० | ० | शुभ |
| रवि | ० | ६ | २० | ० | अशुभ |
| चंद्र | १ | ४ | २० | ० | शुभ |
| भौम | ० | ८ | २६ | ५० | अशुभ |
| बुध | २ | ६ | २६ | ५० | शुभ |
| संख्या | १० | ० | ० | ० | ० |

| गुरोः धनिष्ठा शतभिष पूर्वाभाद्रपद | | | | | |
|---|---|---|---|---|---|
| ग्रह | वर्ष | मास | दिन | घटी | फल |
| गुरु | ३ | ५ | ३ | २० | शुभ |
| राहु | २ | १ | १० | ० | अशुभ |
| शुक्र | ३ | ८ | २० | ० | शुभ |
| शनि | १ | ० | २० | ० | अशुभ |
| चंद्र | २ | ७ | २० | ० | शुभ |
| भौम | १ | ५ | २६ | ५० | अशुभ |
| बुध | २ | ११ | २६ | ५० | शुभ |
| शनि | १ | ९ | ९ | २० | अशुभ |
| संख्या | १९ | ० | ० | ० | ० |

| राहोः उत्तराभाद्रपद अश्विनी भरणी | | | | | |
|---|---|---|---|---|---|
| ग्रह | वर्ष | मास | दिन | घटी | फल |
| राहु | १ | ४ | ० | ० | अशुभ |
| शुक्र | ३ | ४ | ० | ० | शुभ |
| रवि | ० | ८ | ० | ० | अशुभ |
| चंद्र | १ | ८ | ० | ० | शुभ |
| भौम | ० | १० | २० | ० | अशुभ |
| बुध | १ | १० | २० | ० | शुभ |
| शनि | १ | १ | १० | ० | अशुभ |
| गुरु | २ | १ | १० | ० | शुभ |
| संख्या | १२ | ० | ० | ० | ० |

| शुक्रस्य कृत्तिका रोहिणी मृगशिर | | | | | |
|---|---|---|---|---|---|
| ग्रह | वर्ष | मास | दिन | घटी | फल |
| शुक्र | ४ | १ | ० | ० | शुभ |
| रवि | १ | २ | ० | ० | अशुभ |
| चंद्र | २ | ११ | ० | ० | शुभ |
| भौम | १ | ६ | २० | ० | अशुभ |
| बुध | ३ | ३ | २० | ० | शुभ |
| शनि | १ | ११ | १० | ० | अशुभ |
| गुरु | ३ | ८ | १० | ० | शुभ |
| राहु | ३ | ४ | ० | ० | अशुभ |
| संख्या | २१ | ० | ० | ० | ० |

सवि भस्या घटिका स्समाहृताः ॥ ५२॥ भभोगेन भक्ताः फलं भक्त पाक स्तदूना दशा सा भवे

१४५ द्भोग्य संज्ञा ॥ अथ विंशोत्तरी क्रम कोष्टकः ॥ कृत्तिकादि क्रमे रौव ज्ञेया विंशोत्तरी दशा ॥ अंत

| सूर्यस्य मंदवर्षं ६ कृत्ति उत्तरफा० उ षा | | | | चंद्रस्य मंदवर्ष १० रोहि हस्त श्रवण | | | | भौमस्य मंदवर्ष ७ मृगशिर चित्रा० धनिष्ठा | | | | राहो० मंदवर्ष १८ आर्द्रा स्वाति शतभिष | | | | गुरोः मंदवर्ष १६ पुन० विशा पूर्वा भा० | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| नाम | वर्ष | मास | दिवस | नाम | वर्ष | मास | दिन | नाम | वर्ष | मास | दिन | नाम | वर्ष | मास | दिन | नाम | वर्ष | मास | दिन |
| रवि | ० | ३ | १८ | चंद्र | ० | १० | ० | भौम | ० | ४ | २७ | राहु | २ | ४ | १२ | गुरु | २ | १ | १८ |
| चंद्र | ० | ६ | ६ | भौम | ० | ७ | ० | राहु | १ | ० | १८ | गुरु | २ | ४ | २४ | शनि | २ | ६ | १२ |
| भौम | ० | ४ | ६ | राहु | १ | ६ | ० | गुरु | ० | ११ | ६ | शनि | २ | १० | ६ | बुध | २ | ३ | ६ |
| राहु | ० | १० | २४ | गुरु | १ | ४ | ० | शनि | १ | १ | ६ | बुध | २ | ६ | १८ | केतु | ० | ११ | ६ |
| गुरु | ० | ९ | १८ | शनि | १ | ७ | ० | बुध | ० | ११ | २७ | केतु | १ | ० | १८ | शुक्र | २ | ८ | ० |
| शनि | ० | ११ | १२ | बुध | ० | ५ | ० | केतु | ० | ४ | २७ | शुक्र | ३ | ० | ० | रवि | ० | ९ | १८ |
| बुध | ० | १० | ६ | केतु | १ | ७ | ० | शुक्र | १ | ९ | ० | रवि | ० | १० | २४ | चंद्र | १ | ४ | ० |
| केतु | १ | ४ | ६ | शुक्र | १ | ८ | ० | रवि | ० | ४ | ६ | चंद्र | १ | ६ | ० | भौम | ० | ११ | ६ |
| शुक्र | १ | ० | ० | रवि | ० | ६ | ० | चंद्र | ० | ७ | ० | भौम | १ | १ | १८ | राहु | २ | ४ | १४ |

१४५

१४७ दशा गुणा वर्ष मास वासर वर्जिताः ॥ ५३ ॥ अथ रवि दशा फलम् ॥ देशांतरं च निज बंध
१४६ वियोगा दुःखं उद्वेग रोग भय चोर भवा च पीडा ॥ पूर्व स्थितस्य निरिवल स्व धनस्य नाशो-

| शनेः मंदवर्षान् १९ उ.भा. पुष्य. अनुराधा. | | | | |
|---|---|---|---|---|
| नाम | वर्ष | मास | दिन | घटी |
| शनि | ३ | ० | ३ | ० |
| बुध | २ | ८ | ९ | ० |
| केतु | १ | १ | ९ | ० |
| शुक्र | ३ | २ | ० | ० |
| सूर्य | ० | ११ | १२ | ० |
| चंद्र | १ | ७ | ० | ० |
| भौम | १ | १ | ९ | ० |
| राहु | २ | १० | ६ | ० |
| गुरु | २ | ६ | १२ | २४ |

| बुधस्य मंदवर्षे १७ अश्लेषा. ज्येष्ठा रेवती. | | | | |
|---|---|---|---|---|
| नाम | वर्ष | मास | दिन | घटी |
| बुध | २ | ४ | २७ | ० |
| केतु | ० | ११ | २७ | ० |
| शुक्र | २ | १० | ० | ० |
| सूर्य | ० | १० | ६ | ० |
| चंद्र | १ | ५ | ० | ० |
| भौम | ० | ११ | २७ | ० |
| राहु | २ | ६ | १८ | ० |
| गुरु | २ | ३ | ६ | ० |
| शनि | २ | ८ | २१ | २७ |

| केतोः मंदवर्षे ७ मघा. मूल. अश्विनी. | | | |
|---|---|---|---|
| नाम | वर्ष | मास | दिन |
| केतु | ० | ४ | २७ |
| शुक्र | १ | २ | ० |
| सूर्य | ० | ४ | ६ |
| चंद्र | ० | ७ | ० |
| भौम | ० | ४ | २७ |
| राहु | १ | ० | १८ |
| गुरु | ० | ११ | ६ |
| शनि | १ | १ | ९ |
| बुध | ० | ११ | २७ |

| शुक्रस्य मंदवर्षे २० पू.फा. पूर्वाषाढ. भरणी. | | | |
|---|---|---|---|
| नाम | वर्ष | मास | दिन |
| शुक्र | ३ | ४ | ० |
| सूर्य | १ | ० | ० |
| चंद्र | १ | ८ | ० |
| भौम | १ | २ | ० |
| राहु | ३ | ० | ० |
| गुरु | २ | ८ | ० |
| शनि | ३ | २ | ० |
| बुध | २ | १० | ० |
| केतु | १ | २ | ० |

भानो दशा जनन काल दशा भवंति ॥ ५४ ॥ अथ चंद्रस्य २४६

पं.चि. नतर्दशा फलम् ॥ हेमादि भूति वरवाहन यान लाभः शत्रु प्रताप वल वृद्धि परं परान्च ॥ वस्त्रा
१५७ न्नदान शयना सन भोज नानि नूनं सदा शशि दशा गमने भवंति ॥ ५५ ॥ अथ भौमस्य
अंतर्दशा फलम् ॥ भूपाल चौर भय वन्हि कृताच पीड़ा सर्वाङ्गि रोग भय दुःख सुदुःखि
ता न्न ॥ चिंता ज्वरस्य बहु कष्ट दरिद्र युक्तस्या त्सर्वदा कुज दशा जनने भवंति ॥ ५६ ॥
अथ राहोः अंत र्दशा फलम् ॥ दीनो नरो भवति बुद्धि विहीन चिंता सर्वाङ्गि रोग भय दुःख सुदुःखि
ताच ॥ पापानि बंधु बहु कष्ट दरिद्र युक्तं राहो र्दशा जनन काल दशा भवंति ॥ ५७ ॥
अथ गुरोः अंत र्दशा फलम् ॥ राज्याधि कार परि वर्धित चित्त वृत्तिं धर्म्माधि कार परि पालन
सिद्ध बुद्धिं ॥ सद्गृहोपि धन धान्य समृद्धि ता च स्याद्देवता गुरु दशा गमने भवंति ॥
५८ ॥ अथ शनेः अंतर्दशा फलम् ॥ मिथ्या पवाद वध बंधन सर्व हानि मित्रे च बंधु वचने कुत्र
युद्ध बुद्धिः ॥ सिद्धं च कार्य्य मपि यत्र सदा विनष्टं स्या त्सर्वदा शनि दशा गमने भवंति ॥
५९ ॥ बुधस्य अंत र्दशा फलम् ॥ दिव्यांगना नाम दन संगम केलि सौख्यं नाना विलास मभिराम १५७

१ संधी मनोभिरामैः ॥ हेमादि रत्न विभवागम कोश ध्यानं स्यात्सर्वदा बुधदशागमने भवं
१४८ ति ॥ ९० ॥ अथ केतोः अंतर्दशा फलम् ॥ भार्या वियोगजनितं च शरीर दुःखं द्रव्यस्य हा
नि रति कष्ट परं परान्च ॥ रोगाश्च बंधु कलहश्च विदेशता च केतो दशा जनन काल
दशा भवंति ॥ ९१ ॥ अथ शुक्रस्य अंतर्दशा फलम् ॥ आरोग्य वृद्धि परि सर्व शरीर वृद्धिं प्रवेनात
पत्र धन धान्य समाकुलंच ॥ आयुः शरीर सुत पौत्र सुखं नराणां द्रव्यं च भार्गव दशागमने
भवंति ॥ ९२ ॥ अथ योगिनी दशा क्रमम् ॥ स्वर्क्षपिना कि नयनैः संयोज्यं वसु भिर्भजेत्
॥ योगिन्यष्टौ समाख्याता शून्य पातेन संकटा ॥ ९३ ॥ अथ योगिनीनां नामानि ॥ मंगला पिं-
गला धान्या भ्रामरी भद्रिका पिच ॥ उल्का सिद्धा संकटान्च योगिन्यष्टौ दशाः स्मृताः ॥ ९४
॥ अथ वर्ष संख्या ॥ एक द्वित्रीणि वेदाश्च पंच षट् सप्त सानि च ॥ अष्ट वर्षाणि हि भवे मंगला
द्यास्तनु क्रमात् ॥ ९५ ॥ अथ दशायाः फलम् ॥ मंगला मंगलानंद यशो द्रविण दायिनी ॥ पिंगला
तनुते व्याधि भ्रम सो दुःख संभ्रमौ ॥ ९६ ॥ धान्या धन सुहृद्बन्धु रूप सीमन्तिनी करी ॥ भ्रा १४८

मरी जन्म भूमि श्री श्रामये त्सर्वतो दिशं ॥ ६७ ॥ भद्रिका सुख संपत्ति विला स वश दायिनी
उल्का राज्य धना रोग्य हारिणी दुःख कारिणी ॥ ६८ ॥ सिद्धा साधयते कार्य्यं नृणां वै सु-
खदा भवेत् ॥ संकटा शंकट व्याधि मरण क्लेश कारिणी ॥ ६९ ॥ अथ दशा वर्ष संख्या ॥ रवि दि-
न नख संख्या चंद्रमा व्योम वाणैः क्षिति तनय गजा ष्वी चंन्द्रजः षट् शराश्च ॥ शनि रस
गुण संख्या वाक्य ति नाग बाणै नयन युग कराङ्कः सप्ततिः शुक्र संख्या ॥ ७१ ॥ जन्मनां
विंशतिः सूर्ये तृतीये दश चंद्रमाः ॥ भौमश्चतुर्थे चाष्टौ च पंचमे बुध चतुर्थके ॥ ७२ ॥ सप्त-
मं दश सौरिः स्या न्नवमे चाष्टनं गुरोः ॥ दशमे राहु विंशत्या तदूर्ध्वं वु भृगो र्दशा ॥ ७२ ॥ अ-
य फलम् ॥ पंथा भोगो नुतापश्च सौख्यं पीड़ा धनं क्रमात् ॥ नाशः शोक श्च सौख्यं च जन्मा सू-
र्य्य दशा फलम् ॥ ७३ ॥ अथ ग्रहाणां दिन दशा प्रकारः ॥ तिथि वारं च नक्षत्रं नामाक्षर समान्वितं
॥ नवभि श्च हरे द्भागं शेषं दिन दशो च्यते ॥ ७४ ॥ रवि चंद्रो भौम राहू गुरु मंद ज्ञ के सितो ॥
क्रमेणैका दशा ज्ञेयाः फलं पूर्वोक्त मेव हि ॥ ७५ ॥ अपरंच ॥ चतुर्गुणा जन्म नाम तिथि वार

सं.शि. समन्विता ॥ नवभिस्तु हरेद्भागं शेषं दिन दशोच्यते ॥ ७६ ॥ रवौच्च शोक संतापो श-
१५० शांके क्षेम लाभकौ ॥ भूमि पुत्रे तु मृत्युः स्याद्बुधे गद्या विवर्द्धनं ॥ ७७ ॥ गुरौ वित्तं भृगौ सौख्यं
शनौ पीडा न संशयः ॥ राहौच घात पातौच केतौ मृत्युर्दशा फलम् ॥ ७८ ॥ अथ स्तनपानम् ॥
मन्ल भाग्रान नक्षत्रे दिवसोस्य राशिषु ॥ जात कर्मोक्तनक्षत्रे श्रवणत्रय पुनर्वसौ ॥ ७९
॥ त्यक्त्वा स्वाती स्तन्यपानं शुभं प्रोक्तं शुभेहनि ॥ एकत्रिंशद्दिने चैव पयःशंखेन पाययेत् ॥
८० ॥ अथ सूतिका क्वाथः ॥ भैषज्य गदिते धिस्ले वारे दुर्योग वर्जिते ॥ आरोग्य हेतवे क्वाथः
सूतिकाया श्च तच्छिशोः ॥ ८१ ॥ अथ सूतिकापथ्यम् ॥ अन्नाशनोक्त नक्षत्रे शुभाहे सांशुमा
लिनि ॥ हित्वा अरक्तां च दुर्योगं सूतिकापथ्य मीरितम् ॥ ८२ ॥ अथ पंचमी षष्ठी पूजा ॥ जन्म
तः पंचमे घस्ले जीवंत्याः पूजनं निशि ॥ षष्ठेऽन्हि षष्ठिका पूजा गीतै र्जागरणादिभिः ॥ ८३
॥ अथ सूतिका स्नानम् ॥ हस्ते मृगेऽनुराधायां रोहिण्यां रेवती द्वये ॥ उत्तरा त्रितये स्वातौ जीवार्क
कुज वासरे ॥ ८४ ॥ सूतीस्नानं प्रशस्तं स्याद्विहाया र्द्रा त्रयं श्रवम् ॥ विशाखां भरणीमूलं १५०

चित्रा स्वयं कृत्तिका मघा ॥ ८५ ॥ आरक्तो बुधं शनिं षष्ठी द्वादशी मष्टमी स्तथा ॥ अथार्भक-
स्य दंतोत्पत्तौ फलम् ॥ उपरि प्रथमं यस्य जायंते च शिशो र्द्विजाः ॥ दंतै र्वा सह यस्य स्याज्ज
न्म भार्गव सत्तम ॥ ८६ ॥ स्वात्मानं प्रथमे मासि द्वितीये चानुजां स्तथा ॥ तृतीये भ-
गिनीं तुर्य्ये मातरं पंच मेऽग्रजान् ॥ ८७ ॥ निहन्या द्दशनो त्पत्तौ सदंत स्त्वर्भकोऽखि
लान् ॥ षष्ठा दौ लभते भोगान् र्ई पंक्ता व सत्सदा ॥ ८८ ॥ दंता ना मष्टमे मासि षष्ठे-
मासि ततः पुनः ॥ दन्ता यस्य च जायंते माता वा म्रियते पिता ॥ ८९ ॥ बाल को मृ य
ते तत्र स्वय मेव न संशयः ॥ अथ दंतनिर्मुक्तिः ॥ प्रथमं दंत निर्मुक्ति र्ई बालस्य चेद्भ-
वेत् ॥ लोकप्राय मातुलस्येह तथा प्रोक्ता महर्षिभिः ॥ ९० ॥ अथ जलपूजा ॥ पुनर्वसू द्वये
हस्ते मृगे मूला नुराधयोः ॥ श्रवे गुरौ बुधे चंद्रे सत्तिथौ जल पूजनम् ॥ ९१ ॥ गुरो शु-
क्रेऽस्तगे चैत्रे पौषे च मल मास के ॥ मास पूर्तौ विशुद्धा हेन कुर्य्या च्च जलार्च्चनम् ॥
९२ ॥ अथ दोला रोहणम् ॥ खट्वारो ह स्तु कर्त्तव्यो दशमे द्वादशे पिवा ॥ षोडशे दिवसे

संधि ॥ १ ॥ तत स्तृतीये कर्त्तव्यं मासि सूर्यस्य दर्शनम् ॥ चतुर्थे मासि कर्त्तव्यं शिशो श्चं-
२५२ द्रस्य दर्शनम् ॥ २ ॥ मैत्रे पुष्य पुनर्वसौ प्रथम भे पौष्णेऽनु कूले विधौ हस्ते चैव सुरे श्व-
रे च मृग भेतारा सुश स्ता सुच ॥ कुर्य्यान्निः क्रमणं शिशो र्बुध गुरु शुक्रे श्वारि के तिथौ क-
न्या कुंभ तुला मृगा रिभवने सौम्य ग्रहा लोकिते ॥ ३ ॥ अथ कटि सूत्र भूम्यु पवे शनम् ॥ पुष्य
हस्ताश्विनी मूले श्युत्तरे रोहिणी मृगे ॥ ज्येष्ठाया मनुराधायां शुभाह्ने मासि पंचमे ॥ ४ ॥
कुजे शुद्धे सम भ्यर्च्य वाराहं धरणीं भुवि ॥ कटि सूत्र मथो बद्ध्वा बालकं चोप वेशयेत् ॥
५ ॥ पुस्तकं लेखनी शस्त्रं तथा रौप्यं च कांचनम् ॥ तस्मि न्काले यदा दत्ते तद्वृत्त्या जीव-
नं शिशोः ॥ ६ ॥ अथान्न प्राशनम् ॥ युग्मेषु मासेषु च षष्ठ मासा त्सो वत्सरे वानियतं शिशू-
नाम् ॥ अयुग्म मासेषु च कन्य कानां नवान्न सं प्राशन मिष्ट मे तत् ॥ ७ ॥ रेवती हित
ये पुष्ये पुनर्वस्व नुराधयोः ॥ श्रवणादि त्रये हस्त त्रितये रोहिणी मृगे ॥ ८ ॥ कर्णवेधं
तथा पानं क्षुरकर्म्मान्न भोजनम् ॥ पट्ट बंधन चौलान्न प्राशने चोप नायने ॥ ९ ॥ शुभदं २५३

जन्म नक्षत्र मप्यशुभं त्वन्य कर्माणि ॥ उत्तरा सु विशुद्धे च दृशमे शुभ वासरे ॥ १० ॥ गोश्च
१२४ कुंभं तुला कन्या सिंह कर्क नृ युग्म काः ॥ शुभदा राशय श्चैते नमीनमेष वृश्चिकाः ॥
११ ॥ हित्वा ऽरक्तां तथा नंदा मष्टमी द्वादशी तथा ॥ तिथेः क्षय ममां वारान् शनि भौमा-
र्क संज्ञकान् ॥ १२ ॥ जन्म राशि विलग्नाभ्यां नैधनें शे च वर्ज्जयेत् ॥ संपूर्णेन्दू भया
ष्टम्यो र्मध्येंदुः पूर्ण संज्ञकः ॥१३॥ विनष्टेन्दू भयाष्टम्यो र्मध्ये ऽसौ क्षीण संज्ञकः
॥ ॥ अथ तांबूल भक्षणम् ॥ सार्द्ध मास द्वये दद्या त्तां बूलं प्रथमं शिशोः ॥ कर्पूरादि क सं
मिश्र विला शाय हिताय च ॥१४॥ मूलार्क तिष्य कर चित्र हरीन्द्र भेषु पौष्णे तथा मृग
शिरो दिति वासवेषु ॥ शर्केन्दु जीव भृगु बोधन वासरेषु तांबूल भक्षण विधिर्मुनि-
भिः प्रदिष्टः ॥१५॥ अथ कर्ण वेधः ॥ मासे षष्ठे सप्तमे वाष्टमे वा वेध्यो कर्णौ द्वादशे वो-
ड्शे ऽन्हि ॥ मध्ये नान्हः पूर्व भागेन रात्रौ नक्षत्रे द्वे द्वे तिथी वर्ज्ज यित्वा ॥ १६ ॥ रेव-
ती द्वितये पुष्ये पुनर्वस्व नुराधयोः ॥ श्रवण द्वितये चित्रा मृगे हस्ते शुभे तिथौ ॥ १७॥ १२५

ग्र॰ आरभ्य जन्म दिवसं यावत्रिंशद्दिनं भवेत् ॥ जन्म मासः सुविज्ञेयो वर्जितः सर्व कर्मसु १ ग्र॰

१५५ ॥ हित्वा वमं चैत्र पौषौ जन्म मासं हरे श्रयणम् ॥ युग्मा ब्दं जन्म दिक् चैकोन विंशतारं
यथा क्रमात् ॥ १८ ॥ इज्य शुक्रेन्दु वारेषु प्रास्तं विषम वर्षके ॥ स्तो शुद्धे त्रिकोणेऽ
थ केन्द्रे शुभ यहा न्विते ॥ १९ ॥ स्वपद्दे गुरु शुक्रे वा त्रिषष्ठे कादशेऽ शुभे ॥ गुरौ लग्ने
ऽथवा कुर्य्यात्कर्ण वेधं शुभा वहम् ॥ २० ॥ कर्ण वेधोक्तभे प्रात्तं कन्याया घ्राण वे-
धनम् ॥ अथाब्द मुहूर्तम् ॥ प्रति वर्षं तु जन्माह्वे स्नाया दुत्सव पूर्व कम् ॥ गणेशं वा स-
म भ्यर्च्य देवता श्चिर जीविनः ॥ २१ ॥ कृत्वायुष्यं च वि प्रभुक्तं कर्म दाना न्य नेकशः
॥ वध्वा मंगल सूत्रंच भुक्ता मिष्टं द्विजै स्सह ॥ २२ ॥ अथ चूडाकर्म ॥ जला शय सुराग
म प्रति ष्ठा व्रत वन्धनम् ॥ कन्या यानं विवाहं च चौलं राज्या भिषेच नम् ॥ २३ ॥ गु-
रु भार्गव यो रस्ते वाल्य वार्द्धक यो रपि ॥ केतू दयेऽपि वै न स्यादि ति विद्वास्व संमतम्
॥ २४ ॥ दृश्या हे पश्चिमे वाल्यं पंचाहं वार्द्धकं भृगोः ॥ प्राच्यां तु लि दिनं वाल्यं पक्षं वार्द्ध १५५

१.कि क मुच्यते ॥ २५॥ पक्षं वाल्यं च वार्द्धक्यं गुरो स्त्याज्यं शुभे सदा ॥ दशाहं वाल्य वार्द्धक्ये
१५९ शुक्रे सप्ताह मूचिरे ॥ २६ ॥ त्र्यहं चावश्य के कृत्ये केचिद् गर्ग जीवयोः ॥ शुक्रो गुरुःप्रा-
क्परतश्च वालो विंध्येदशावर्तियु सप्त रात्रम् ॥ वंगेयु हूणेषु च षट् च पंच प्रोषेतु देशे
त्रि दिनं निषिद्धम् ॥ २७ ॥ अथ शुक्रो दयास्त मानम् ॥ प्राच्यां नेत्रेषु दिग्घ स्तान् २५२
दृश्यो भवति भार्गवः वसु शैल ७८ मिता स्तत्र यातोऽस्तं नैव दृश्यते ॥ २८ ॥ स्व-
वाणाब्धि मितान् घस्रान् २५० प्रतीच्यां दृश्यते भृगुः ॥ तत्रै वार्क कर घस्तो न वाहा
नि न दृश्यते ॥ २९ ॥ अथ गुरूदयास्त मानम् ॥ प्रायो वाचस्प तिर्मासं भवती क्षरगो
चरः ॥ प्राच्या मुदयते मासं याति पश्चात्तु वत्सरान् ॥ ३० ॥ अथेन्दो र्वाल वृद्धत्वम् ॥ वृ-
द्ध त्व मिंदो स्त्रि दिनं दिनार्द्धं वाल त्व मस्तत्व महर्दयं च ॥ हिनोक्त मेकं दिवसं प्रिशु
त्वमित्येत दिंदोस्त दयुक्त मेव ॥ ३१ ॥ अथ केतूदयम् ॥ त्रिशिर स्त्वास्य त्रि तारा श्च रक्त
लोहित रश्मयः ॥ प्राय शा स्तूतरा मा शां सचन्ते नित्य मेव हि ॥ ३२ ॥ केतो रस्त दिना १५९

म थि दूर्द्धं सप्त यात्राणि वर्जयेत् ॥ ब्रह्मपुत्रो द्रमे वर्ज्यस्तत यात्रादि मंगलम् ॥ ३३ ॥ चन्द्रसु-
१५७ त एव त्रिशिखोवर्णौ स्त्रिभिर्युगांतकरः ॥ अनियत दिवस प्रभ, वो विज्ञेयो ब्रह्म दंडाख्यः
॥ ३४ ॥ केतो रस दिना दूर्द्धं सप्ताहं मंगलं त्यजेत् ॥ यावत्केतूदयस्तावत् शुद्ध समयो हि
सः ॥ ३५ ॥ केतूदये सप्त दिनानि चोर्द्धं विहाय यात्रादिषु गर्हितानि ॥ दिनानि शेषाणि
शुभानि नूनं वदन्ति रैभ्य प्रमुखा मुनीन्द्राः ॥ ३६ ॥ चौलं संवत्सरे पूर्णे त्रि तया द्विषमे चरे-
त् ॥ सौम्यायने विचैत्रेषु जीवज्य शुक्रेन्दु वासरे ॥ ३७ ॥ अथ स्याद्ब्राह्मणस्यार्के क्षत्रिय-
स्य कुजे हनि ॥ मंदाहे वैश्य शूद्राणां चैव लोक तिथिभादिषु ॥ ३८ ॥ हस्ताश्वि विष्णु
मौलानि श्रविष्ठा दित्य पुष्यभम् ॥ सौम्य चित्रे तथा क्षौरे उत्तमान व तारकाः ॥ ३९ ॥
श्रीरायुत्तराणि वायव्य रोहिणी वारुणा तथा ॥ क्षौरे षराम ध्यमा प्रोक्ता शेषा द्वादश ग
र्हिताः ॥ ४० ॥ क्षौरादौ जन्म लग्नं शुभम् ॥ कृषिं प्रयाणं क्षौरं च विवाहः प्राशनं तथा ॥ एषि
ष्वो वस्त्रं च दानं च जन्म राशौ शुभं भवेत् ॥ ४१ ॥ आत्म राश्युदये षष्ठे द्वादशे निधने १५७

नया ॥ शत्रु क्षेत्रे च नीचे च क्षौरं नैव प्रशस्यते ॥ ४२ ॥ मेषे दुःखो मृगेन्द्रे च वृश्चि
२५८ के व्यसनं भवेत् ॥ राजा वौधे च धनुषि शुभयुक्तेन शुध्यति ॥ ४३ ॥ विष शस्त्र जलेर्घो
रैः पीड्यते मरणान्वितः ॥ क्षौरे मृत्यु षष्ठे लग्ने शुभ युक्ते ऽपि सङ्गतः ॥ ४४ ॥ यामित्रे
भास्करे क्षौरे मृत्युस्स्याद्भूमिजे तथा ॥ शुक्रे सौख्यविनाशस्स्यान्मंद भाग्य धने ध्वरे
॥ ४५ ॥ लग्ने खेटे च लोपेते चंद्र तारा बलान्विते ॥ ज्येष्ठे ज्येष्ठस्य नो मासे मार्ग
शीर्षे ऽपि के चन ॥ ४६ ॥ सूनो मातरि गर्भिण्यां चूडा कर्म न कारयेत् ॥ पंचमा
द्वात्सागथोर्द्ध गर्भिण्यामपि कारयेत् ॥ ४७ ॥ यस्य मांगलिकं कृत्यं तस्य माता
रजस्वला ॥ तदा मृत्युमवाप्नोति पंचमं दिवसं विना ॥ ४८ ॥ विवाहोत्सव कार्येषु
माता चैव रजस्वला ॥ वैधव्यं जायते तत्र नृनार्य्योः पाणिपीडने ॥ ४९ ॥ अथाक्षरा
रंभः ॥ सौम्यायने शुभे मासि स्वाध्याय दिवसे शुभे ॥ रवौ जीवे बुधे शुक्रे लग्ने खेट व-
लान्विते ॥ ५० ॥ रेवती द्वितये पुष्ये पुनर्वसु नुराधयोः ॥ आर्द्रत्र्ये श्रवणे हस्ते स्वातौ २५८

चित्रा भिधे तथा ॥ ५१ ॥ हेरं बांवेच वाग्देवी तथा भ्यच्चेंष्ट देवताः ॥ पंचमाब्दे नरः
कुर्य्याल्लिप्यारंभं बुधः सदा ॥ ५२ ॥ अथोप नयनम् ॥ आषोड्शा द्ब्राह्मणस्यसावित्री
नाभिवर्त्तते ॥ आद्वाविंशा द्ब्रह्म बंधोरा चतु र्विंशति द्द्विजः ॥ ५३ ॥ अत ऊर्द्ध्व त्रयो
प्येते यथा काल मसंस्कृताः ॥ सावित्री पतिता व्रात्या भवत्यापि च गर्हिता ॥ ५४ ॥
कश्यपः ॥ ऋतौ वंसते विप्राणां ग्रीष्मे राज्ञां सरद्य थ ॥ विप्रं मुख्यं च सर्वेषां द्विजानां
चोप नायनम् ॥ ५५ ॥ साधारणं च मासेषु माघादि षुच पंचसु ॥ विन तुना वसंते न
कृष्ण पक्षे गल ग्रहे ॥ ५६ ॥ अपराह्ने चोपनीतः पुनः संस्कार मर्हति ॥ त्रिधा विभज्य
दिवसं तत्रा द्यो कर्म्म वैदिकम् ॥ ५७ ॥ द्वितीये मानुषं कार्य्यं तृतीये ऽ पैतृ पैतृकम् ॥ चंद्रे
लग्ने ऽति पापतः स्यात् क्षय रोगी भिते नरे ॥ ५८ ॥ शुक्ल पक्षे भवे घ ज्या स्वर्भेतुंगे ति
शोषतः ॥ वर्द्धमानो ऽपि वा पूर्णः चन्द्रो यदि विलग्नतः ॥ ५९ ॥ निःस्वं करोति व्रतिनं लग्न गः स्वयरी
गिराम् ॥ शाखाधिपति वारश्च शाखाधिपबलं शिशोः ॥ शाखाधि पतिलग्नं चाव्रतयं दुर्लभं व्र-

ते ६॰ ग्रस्तेषु गुरुशुक्राणां मौढ्ये वाल्ये च वार्द्धके ॥ ६१॥ नैवोपनयनं कार्य्यं वर्णे
शे दुर्बले सति ॥ शत्रुनीचाधिशत्रुस्थे स्वांशे वास्वोच्चभागगे ॥ ६२॥ ग्रस्ते शे वा
गुरौ शुक्रे न नीचफलमश्नुते ॥ जन्मोदये जन्मसुतारकासु मासे तथा जन्मतिथौ
च राशौ व्रते न विप्रोऽल्पपरिश्रुतोऽपि शास्त्रे विशेषः प्रथितः पृथिव्याम् ॥ ६३ ॥ क
भ्रेस्ते गर्गपराशराद्यैः फलं यदुक्तं व्रतबंधने तु॥ ततोऽधिकं जन्मसुतारकासु मासेऽव
वा जन्मनि वाडवानाम् ॥ ६४ ॥ जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती ॥ आद्य
गर्भे तु विप्राणां क्षत्रादीनामनादिमे ६५॥ बालस्य बलहीनोऽपि शांत्या जीवो बलप्रदः
॥ ६६ ॥ यथोक्तवत्सरे कार्य्यमनुक्ते नोपनायनम् ॥ वक्रेऽपि वर्द्धन गुरुर्बली चेच्छा-
स्या प्रशस्तं व्रतबंधकर्म्म ॥ अनुक्तवर्षे सुबलग्रहोऽपि नैवैतयोरब्दबलं गरीयः ॥ ६७
॥ व्रतबंधे विवाहे च गतिर्ग्राह्या विशेषतः ॥ गोचरे शैव कर्त्तव्यं वेधादिकमकारणम्
६८ ॥ वेधस्तु ॥ व्यये पक्षे त्रिगे शैलैः खगो नंदे सुखे शरैः ॥ रंध्रे रुद्रे गिरे विद्धो गुरुः ६९

शुद्दा शुभा ऽन्य था॥७०राजमार्तंडः ॥ अष्ट वर्ग विशुद्धेषु गुरु शीतां शुभा नुषु ॥ वृतोद्वा
हे तु कर्त्तव्यो गोचरेण कदा चन ॥ अष्ट वर्गेण ये शुद्दा स्ते शुद्दा सर्व कर्म्मसु ॥७१॥
सूक्ष्मा सु वर्ग सं शुद्धि स्थुला शुद्धि स्तु गोचरे ॥ व्रत वंधस्य विप्राणां गर्भाद्वा जन्मतो ऽष्ट
मे ॥७२॥ षष्ठे चैका दशे ऽब्दे वाक्षत्रियाणा मुदीरितः ॥ वैश्यानां द्वादशे ऽब्दे स्या
दष्ट मे गर्भ तो ऽपि वा ॥७३॥ विप्रस्य षोड शाब्द पर्यन्तं विप्रा द्वय भूभुजान् ॥ वैश्यां
नां तु चतु विंशा द्वौण काल उदाहृतः ॥७४॥ निज वर्गेश शाखेश भास्व छशी स्व-
रेष्वपु ॥ वीर्ये वत्सु द्विजातीनां व्रत वंधः शुभा वहः ॥७५॥ अथवर्णेशाः ॥ जीव शुक्रो
तु विप्रेशौ भूभुजां रवि भौम जौ ॥ विशो ऽब्जोस्य सूद्राणां अंत्यजानां पतिः शनिः ॥७६
॥ अथ वेदाधीशः ॥ ऋग्वेदे शो गुरुः प्रोक्तो यजुषो भार्गवः पतिः ॥ साम वेदे श्वरो भौमः पति
श्चाथर्वणो बुधः ॥७७॥ अथ गुर्वादि वलम् ॥ गुरु सूर्य्य वलं ज्ञेयं विवाहे यदि व स्यते ॥
चंद्र तारा वलं पूर्व मुक्तं सार्धं वलैः शुभम् ॥७८॥ अथमासादिः ॥ माघात्यं च शुमासेषु २६२

सं.शि शुक्ले जीवज्ञ भार्गवे ॥ केचित्तु कृष्ण पक्षेऽपि प्रथम त्रितये जगुः ॥७९॥ अथ तिथयः
२६७ द्वित्र्येकादश दिकं च द्वादश प्रमिते तिथौ ॥ अश्विनी मृग चित्रासु हस्ते स्वात्यां च सू
ऋभे ॥ ८० ॥ पुष्ये च पूर्व फाल्गुण्यां श्रवणे पौष्णभे तथा ॥ वासवे शततारासु व्रतबंधः
प्रशस्यते ॥ ८१ ॥ अथ प्रतिवेदं नक्षत्राणि ॥ मूले हस्त त्रये सार्प्य सैके पूर्वा त्रये तथा ॥
ऋग्वेदाध्यायिनां कार्य्यं मेखला वंधनं बुधैः ॥ ८२ ॥ पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रे त्व-
ष्ट्रांऋभे ॥ श्रौवेषु च प्रशस्तं स्याद्यजुषां मौंजिवंधनम् ॥ ८३ ॥ पुष्य वासव हस्ता-
श्विशिव करोत्तरा त्रयम् ॥ प्रशस्तं मेखला वंधे वटूनां साम गायिनाम् ॥ ८४॥ मृगार्द्रे
त्राश्विनी हस्तो रेवत्य दिति वासवम् ॥ अथर्व पाठिनां शस्तोभ गणोऽयं व्रताप्तये ॥
८५ ॥ अथ साधारणे नक्षत्र विशेषः ॥ पुनर्वसौ व्रतं नेष्टं शतभे केच नेतिच ॥ अथ व्रतेनि
विद्धम् ॥ कृष्ण पक्षे शनौ रात्रौ प्रदोषे चा गल ग्रहे ॥ अनाध्याये ऽपराह्णे च न कुर्यादु-
त वंधनम् ॥ ८७ ॥ अथानाध्यायः ॥ संक्रांति युग मन्वादी द्वितीया ज्येष्ठ शुक्लगा ॥ २६२

शि चैत्र कृष्ण तृतीयाच द्वादशी माघ शुक्लजा ॥ ८८ ॥ प्रति पक्षे ऽष्टमी चैव चतुर्दश्याः
२६३ दिन त्रयम् ॥ अनाध्याया इमेवर्ज्या स्वाध्याय व्रत बंधयोः ॥ ८९ ॥ अथ प्रदोषः ॥ च-
तुर्थी प्रथमे यामे यामे युग्मे त्रयोदशी ॥ सप्तमी सार्द्ध यामे च प्रदोषस्त्या न्निशा मुखे
॥ ९० ॥ अथ गलग्रहाः ॥ सप्तम्या स्त्रितयं चैव त्रयोदश्या श्चतुष्टयम् ॥ चतुर्थी चैकतः
प्रोक्ता अष्टा वेते गलग्रहाः ॥ ९१ ॥ अथ लग्न बलम् ॥ त्रि ३ षट् ६ संस्थाः खलाः खे १०
के चंद्रो द्वि २ धन ७ ख १० त्रि ३ गः ॥ सौम्याः केन्द्र त्रिकोण स्थाः १।४।७।१०।९।
५। लाभे सर्वे व्रते शुभाः ॥ ९२ ॥ जीवेन्दु भृगु लग्नेशा व्रते नेष्टा षडष्टगाः ॥ शु-
क्रेन्दु व्यय गौनेष्टौ खला लग्नाष्ट पंचगाः ॥ ९३ ॥ व्रते सौम्या स्त्वशुभाः प्रोक्ताः षड
ष्टांत्य विवर्जिताः ॥ शुक्ले स्वर्क्षो च्चगश्चंद्रो लग्ने श्रेष्ठो रविः क्वचित् ॥ ९४ ॥ क्रूर-
ज्य शुक्रांशगो लग्ने चंद्रः शस्तो व्रते मतः ॥ नान्यत्राथ निजां शेज्ञः पुनर्वसु श्रवे शु-
भः ॥ ९५ ॥ अथ केन्द्रस्थ खेट फलम् ॥ भूपा श्रयी वणिग् वृत्तिः पाल्ल सत्यात्मको मतः २६६

मु
१६४
॥ पंडित स्वार्थ वान्म्लेच्छसेवी केन्द्रेऽर्कतः क्रमात् ॥ १९६ ॥ अथ व्रतयोगः ॥ ल
ग्ने गुरु र्भृगुः कोणे शुक्रांशेऽब्जे व्रते शुभः ॥ गुरु श्चंद्रो भृगुर्नेष्टो रवि भौमार्कि
संयुतः ॥ १९७ ॥ अथ चैत्र शाप्यत्ययम् ॥ गोचराष्टक वर्गाभ्यां यस्य शुद्धि र्नलभ्यते ॥
तस्योपनयनं कार्य्यं चैत्रे मीन गते रवौ ॥ १९८ ॥ हरौ सिंहांशगे जीवे नीच र्क्षे नीच
भागगे ॥ मौंजीवंधः शुभः प्रोक्तः श्चैत्रे मीन गते रवौ ॥ १९९ ॥ अथात्र मातुः रजो दोषे
विर्णयः ॥ मातु रज स्वला दोषो नांदी श्राद्धोत्तरं तथा ॥ आवश्य के व्रतं चौलं शांत्या
कुर्य्यात्करग्रहम् ॥ २०० ॥ अथ केशांत समावर्त ॥ चौलोक्त समये कार्यं केशांतं षोड
शाब्द के ॥ व्रत वंधोक्त कालेतु समावर्त्तन मीरितम् ॥ २०१ ॥ अथ राज्ञां क्षुरिका वंधनम् ॥
व्रतोक्त मास तिथ्या दौ विचैत्रे सवले कुजे ॥ विभौमे क्षुरिका बंधं शास्त्रिवा ह्यन्नृ
भुजाम् ॥ २०२ ॥ द्वि वेदि कुल संभूत सरयू रत्न संग्रहे ॥ शिरो मणौ समाप्तैषा प्र-
मेयं द्विचतुर्दशी ॥ २०३ ॥ इति संग्रह शिरो मणौ संस्कार कथनं नाम चतुर्दशोऽध्यायः ॥ १६४

सं·शि· ॥ २४ ॥ अथ विवाह प्रकरणम् ॥ योषा धर्म्मार्थ कामानां साध्वी चेत्सा धनं भवेत् ॥ प्रो
१६५ क्तं लग्न व प्राप्त स्याः शुभं लग्न मथोच्यते ॥ १ ॥ दैवज्ञं सुदिनेऽभ्यर्च्य तां कूल
श्री फलादि भिः ॥ विज्ञाप्य यां तयोः पुच्छे द्विवाहं वर कन्ययोः ॥ २ ॥ प्रश्नलग्ना
द्विगी २० प्रा ११ मिन ३ चाप ५ प्रोल ७ स्थितेविधौ ॥ सद्यः परिणयो जीव दृष्टे स्याद्वर
कन्ययोः ॥ ३ ॥ गो तुलाक र्क लग्ने वा शुभेक्षित युते तथा ॥ विषम स्त्रीग्रा गो शुक्र
चंद्रो चेत्प्रश्न तस्तनुम् ॥ ४ ॥ बलिनो यस्तौ तत्र स्त्रीप्रदौ सम भांशगौ ॥ चंद्रे षष्ठेऽ
ष्टमे पापे लग्ने वा धूनगे कुजे ॥ ५ ॥ लग्नेऽब्जे वा धून भौमे वैधव्यं चाष्टमेऽब्द के
॥ लग्नाच्च पंचमे पापे नीच स्थे भानु वीक्षिते ॥ ६ ॥ सा कन्या मृत वत्सा स्या दथवा
कुलटा भवम् ॥ धूने सेंदु भृगौ रंडा भौमे वा कुलटा भवेत् ॥ ७ ॥ सुशीला शुभ-
गा जीवे बुधे च प्रश्न लग्न तः ॥ चन्द्रः षष्ठेऽष्टमे पक्षे वा कुले सम राशिगः ॥ ८ ॥
क्रूरे क्षिते विवाहस्य भंगदः परि कीर्तितः ॥ यादृक् संतान संयुक्ता योषि तस्यैरं प्रमा·

व्रजेत् ॥ ९ ॥ तां विलोक्य तथा पत्यं तस्य मध्ये वदेत्सुधीः ॥ षांख भेय्यो द्विना-
द्य्येतम्ने स्यान्मंगलं सदा ॥ १० ॥ वायसस्य शृगालादिर वध्येद् शुभं भवेत्
॥ दंपत्योरंतरा मैत्री विवाहेन शुभा वहा ॥ ११ ॥ जुंजा वर्गस्तथा वर्णो वश्यं ता
रथ योनिजा ॥ ग्रह मैत्री गणो राशि मैत्री नाडीति वेदश ॥ १२ ॥ यथोत्तर बला
श्चेति विज्ञेयास्तु परस्परम् ॥ गुणाधिको समु द्वाहः कर्त्तव्यो वर कन्ययोः ॥ १३ ॥
अथ जुंजाप्रीतिः ॥ पौष्णादिकं षड्ड मुशंति पूर्व मार्द्रादिकं द्वादश मध्य भागम् ॥ पौरंद-
राद्यं नव कंभ चक्रं परंच भागं गण काः विदग्धाः ॥ १४ ॥ पूर्व भागे पतिः श्रेष्ठो मध्य-
भागे च कन्यका ॥ परभागे च नक्षत्रे द्वयोः प्रीति र्न्न हीयसी ॥ १५ ॥ अथ वर्गप्रीतिः ॥
अवर्गो गरुडः प्रोक्तो मार्जारस्तु क वर्गकः ॥ चवर्गः केशरी ज्ञेयो टवर्गः कुक्कुरः स्मृ-
तः ॥ १६ ॥ तवर्ग स्सर्प्प संज्ञस्स्यात् पवर्गो मूष को मतः ॥ यवर्गो हरिणस्त्व श्च
शवर्गो मेष उच्यते ॥ १७ ॥ गरुडोरगयो र्वैरं तथा मेष शुनोरपि ॥ मिथश्चा खुवि- १९९

स.ग. डा लस्यात् शार्दूल मृगयो स्तथा ॥ १८॥ स्ववर्गा त्पंचम श्रेष्ठ श्चतुर्थो मित्र सं-
२६७ ज्ञकः ॥ उदासीन स्तृतीय स्तु वर्ग भेद स्त्रिधो च्यते ॥ १९॥ वर्गा रित्वे महद्दु रंत
वर्गौ को प्रीति रुत्तमा ॥ कन्यका वश्यो स्त्वेव स्वामि सेवक यो रपि ॥ २०॥ अथ वर्णप्री-
तिः ॥ मीनालि कर्कटा. विप्राः क्षत्री मेषो हरि र्द्धनुः ॥ तुला द्वंद्व घटाः शूद्राः वृषक-
न्या मृगा विशः ॥ २१॥ नोत्तमा सुद्व हे त्कन्यां ब्राह्मणीं च विशेषतः ॥ सुयते हीन व-
र्णश्च ब्राह्मणा सहशो यदि ॥ २२॥ वर्ण श्रेष्ठा च या नारी तस्या भर्ता न जीवति ॥ य-
दि जीवति चेद्भर्त्ता तदा पुत्रो न लभ्यते ॥ २३॥ अथ वश्यप्रीतिः ॥ युग्मं कुंभ स्तुला कन्या
मानवलं धनुषो हि पात् ॥ परार्द्धं धनुष श्चैव पूर्वार्द्धं म्मकर स्य च ॥ २४॥ केशरी वृ-
ष भारव्य श्च मेष श्चैते चतुः पदाः ॥ मृगोत्तरं दलं मीनो जल चारी प्रकीर्तितः ॥
२५॥ कर्कटः कीट संज्ञश्च वृश्चिक स्तु सरी सृपः ॥ सिंहं विना वशगा स्सर्वे हि पदा-
नां चतुः पदाः ॥ २६॥ भक्ष्या जल चरास्तेषां भय स्थाने सरी सृपाः ॥ २७॥ अथ-

पि॰ नारमैत्री ॥ कन्या भं वर भाद्गण्यं वधूभा द्दर भन्नाया ॥ नव द्दच्छेष मे नेष्टं सप्त पंच त्रि
१९८ संख्य के ॥ २८ ॥ अथयोनिमैत्री ॥ अश्विनी प्रात अश्वाश्वौ माहिषो स्वाति हस्तकौ ॥
पूर्वा धनिष्ट यो स्सिंहः भरण्या न्त भयो गजः ॥ २९ ॥ कृत्तिका पुष्य यो मेषः श्रुत्या
द्वा पादयोः कपिः ॥ ऊषा भि जिद्वयो र्वभ्रू रोहिणी मृग यो रहिः ॥ ३० ॥ मूलानुरा-
धयो रेणः श्वा मूला र्द्रा भयो स्त्वया ॥ पुन रश्ले षयो र्मातु राखुः पूफा मघा द्वयोः ॥ ३१
॥ विशाखा चित्रयो र्व्याघ्रो गो रुफोत्तर भाद्रयोः ॥ मैत्रीवैर विचा रार्थं भानां प्रोक्ता खु-
योनयः ॥ ३२ ॥ गो व्याघ्रं गज सिंह मश्व महिषं श्वैणं च वभ्रूरगं वैरं वानर मेष
कं च सुमहत द्द दिडालो न्दुरम् ॥ लोकानां व्यवहार तोऽन्य दपि च ज्ञात्वा प्रयत्ना
दिदं दम्पत्यो र्नृप भृत्य यो रपि सदा वर्ज्यं शुभ स्याप्तिभिः ॥ ३३ ॥ अथ ग्रहमैत्री ॥ मि-
त्राणि द्युमणेः कुजेज्य शशिनः शुक्रार्कजौ वैरिणौ सौम्यश्चास्य समो विधो र्बुधर
वी मित्रे न चास्य द्विषत् ॥ शेषाश्चास्य समाः कुजस्य सुहृद श्चंद्रेज्य सूर्या बुधः १९८

शत्रुः शुक्र शनी समौ च शशभृत्सूनोः सितार्कस्करौ ॥ ३४ ॥ मित्रे चास्य रिपुः
शशी गुरु शनि क्ष्माजाः समाः गीष्पते र्मित्राण्यर्क कुजेन्दवो बुधसितौ शत्रू समः
सूर्यजः ॥ मित्रे सौम्य शनी कवेश्शशिरवी शत्रू कुजेज्यौ समौ मित्रःशुक्र बुधौ श-
नेः शशिरवि क्ष्माजाः द्विषोऽन्यः समः ॥ ३५ ॥ दंपत्यो राशिपो मैत्री मिथस्स्या-
च्छोभनन्तदा ॥ अहिते त्वहितं विद्यात्समेवै मध्यमं स्मृतम् ॥ ३६ ॥ अथ मैत्रीफल-
म् ॥ नवर्गवर्णौ न गणो न योनि र्द्विद्वादशे नैव षडष्टकेवा ॥ तारा विरुद्धे नवपंच मेवा
मैत्री यदा स्याच्छुभदो विवाहः ॥ ३७ ॥ अथ गण मैत्री ॥ हस्तस्त्वती श्रुतिः पुष्योऽनु
राधा रेवती द्वयम् ॥ पुनर्वसु न्मग श्चैषः प्रोच्यते देवता गणः ॥ ३८ ॥ तिस्रः पूर्वाउत्त-
राश्च तिस्रोऽप्यार्द्रा च रोहिणी ॥ भरणी च मनुष्याख्यो गणोयंः कथितो बुधैः ॥ ३९
॥ कृत्तिका च मघाश्लेषा विशाखा शततारका ॥ चित्रा ज्येष्ठा धनिष्ठा च मूलं रक्षोग-
णःस्मृतः ॥ ४० ॥ स्वगणे परमा प्रीति र्मध्यमा देवमर्त्ययोः ॥ मर्त्यराक्षसयोर्मृत्युः 

कल हो देव रक्ष सोः ॥ ४१ ॥ राक्षसी तु यदा नारी पुरुषो मानवो भवेत् ॥ विवा-
हिताष्टमे मासि साच भक्षयते पतिं ॥ ४२ ॥ अथ गणदोषापवादः ॥ मैत्र्यां राश्योः प्रयोरं-
श स्वामिनो वर कन्ययोः॥ न तत्र गण दोष स्स्याद्विवाह श्शुभदो मतः ॥ ४३ ॥ रक्षो-
नाम्नु गणा नारी चेत्तदो द्वाहनं तयोः ॥ योनि मैत्र्यादिना कार्य्य मिदं गर्गादि भाषितम्
॥ ४४ ॥ अथ राशिकूटम् ॥ राश्योः षड्डाष्ट के मृत्यु स्त्रि कोणे त्वन पत्यता ॥ नैष्वं द्विद्वाद-
शे ज्ञेयं सौख्य मन्यत्र चोभयोः ॥ ४५ ॥ कुमार्य्या विषमा ङ्गा शेः षष्ठं तु वर भं न स-
त् ॥ समा ङ्गा शेः शुभं षष्ठं विपरीत मसत्स्मृतम् ॥ ४६ ॥ वरस्य पञ्चमे कन्या कन्या-
या नवमे वरः ॥ एतत्त्रि कोण कं ग्राह्यं पुत्र पौत्र सुखा वहम् ॥ ४७ ॥ अथ कूटापवादः ॥
प्रोक्ते दुष्ट भ कूटेऽपि राश्यो रेकाधि पत्य के ॥ मैत्र्यं वोपनयः श्रेष्ठो होक नाडी न चेत्तयोः
॥ ४८ ॥ तुला वृष भयोर्म्मीन सिंहयोः कुंभ कन्ययोः ॥ धनुः कर्कट यो र्नक्र युग्म योश्चा-
लि मेषयोः ॥ ४९ ॥ प्रीतिः षष्ठाष्टकं चैत त्तदन्य त्त्याज्य मेवहि ॥ ५० ॥ राशिपो वैरभावे

ऽपि मैत्री चेत्स्यात्तदं प्रयोः ॥ नाडी वश्येतु ताराणां शुद्धा वुद्ध हन्ने स्मृतम् ॥ ५१॥ भा-
सिनी जन्म नक्षत्रा द्वितीयं पतिजन्म भम् ॥ न शुभं भर्तृ नाशाय कथितं ब्रह्म यामले
॥ ५२॥ अथ नाडी शुद्धिः ॥ ज्येष्ठा मूलाश्वि भार्द्रा स्या द्वयं शत भिषा द्वयम् ॥ उत्तरा फाल्गु
णी युग्मगाद्या नाडी यमीरिता ॥ ५३ ॥ चित्रा पुष्यो ऽनुराधा च धनिष्ठा भरणी मृगः
॥ पूर्वा पाढो त्तरा भाद्र पूफा षा मध्य नाडिका ॥ ५४ ॥ रोहिणी कृत्तिका श्लेषा मघा स्वा
ती द्वयन्त था ॥ रेवती चोत्तरा षाढा श्रवणा श्चांत्य नाडिका ॥ ५५॥ दंपत्यो रेक नाडी-
स्थे ऋक्षे नेष्टः कर ग्रहः ॥ मध्य नाडी गते मृत्यु स्तस्मा त्तां सर्व था त्यजेत् ॥ ५६ ॥
अथ नाडी दोषापवादः ॥ राश्येके भिन्न भेष्ये के ऽन्य राशौ तथैकभे ॥ भिन्नेंऽशेनद्वयो,
र्दोषा गण नाडी भकूट जाः ॥ ५७ ॥ अथैकभेऽपि विशेषः ॥ विशाखार्द्राश्रवः पुष्यो रो-
हिण्युत्तर भाद्र पात् ॥ रेवती च मघा श्रेष्ठं नेतरश्चैक भे द्वयोः ॥ ५८ ॥ अथ नाडी वि-
षये विशेषः ॥ उक्तं नारदेन ॥ चतुस्त्रि द्व्यघ्रि सोस्था याः कन्यायाः क्रमशोऽश्वि भात् ॥

संधि वन्हि भाद्विंदु भान्नाडी त्रि चतुः पंच पर्वसु ॥ गणयेत्संख्य या चैक नाड्यां मृत्यु
१७४ र्न संशयः ॥ ५९ ॥ एक नाडी विवाहश्च गुणैः सर्वैस्समन्वितः ॥ वर्जनीयः प्रय-
त्नेन दंपत्यो र्निधनं यतः ॥ ६० ॥ गर्गः ॥ चतुःपात्कन्य का ऋक्षं गणये दाश्विना
दिकम् ॥ त्रिभं से व्याप सव्येन भिन्न पर्व शुभावहम् ॥ ६१ ॥ कन्य का भं त्रिपा-
त्चे त्स्या द्गण येत्कृत्तिका दिकम् ॥ चतुर्भिः पर्वभि स्तु द्द भिजित्तार का न्वितम्
॥ ६२ ॥ कन्य का र्क्षं द्विपात्चेत्स्याद्गण येत्सौम्य भादिकम् ॥ पंच भिस्त्व वरो हेतु पं
चमां गुलि वर्ज्जितम् ॥ ६३ ॥ चतुर्न्नाडी त्वहल्यायां पांचाले पंच नाडिका ॥ त्रि
नाडी सर्व देशेषु वर्ज्जनीया प्रयत्नतः ॥ ६४ ॥ अथ नाडी विचारे चंडेश्वरः ॥ पृष्ठ म-
ध्ये शुभ समन्वितःभोगः कोडे वनिता दिन्न वियोगः ॥ मध्य रेखे भवति विवाहे ज-
भयो र्मरणं वदति वराहः ॥ ६५ ॥ अश्व्यादि नाडी वेध र्क्षं क्रमात्यश्च द्वितीय कम्
॥ याम्या दि तुर्य्यं तुर्य्यंच कृत्तिकादि द्विषष्ठ कम् ॥ ६६ ॥ अर्के न्दुज क्षोणि तनूज १७

जीवाः केतुः सितो राहु शशांकशौराः॥ जन्मादि नाडी त्रितये शुभा स्युः शुभेशुभं
स्यादशुभेऽशुभंच ॥ ६७ ॥ तद्यथा अर्कः १। १०। १९ बुधः २। ११। २० भौमः ३।
१२। २१। गुरुः ४। १३। २२। केतुः ५। १४। २३ शुक्रः ६। १५। २४। राहुः ७। १६। २५
चंद्रः ८। १७। २६। शनिः ९। १८। २७ अथ नाड्यादि दोषे दानानि॥ हेमाज्य रत्नगो
दानं मृत्युञ्जय जपस्तथा ॥ कुर्य्यादवश्य को द्वाहे नाडी दोषापनुत्तये ॥ ६८ ॥ता
मन्द्विद्वादशे दद्यात्सुवर्णञ्च षड्ष्टके ॥ गोयुगन्नव पञ्चाख्येस्वर्णं वर्णादि दोषजे-
॥ ६९॥ हेमान्नं वसनं धेनुं सर्व दोषापनुत्तये ॥ ७०॥ अथ वश्यादि गुणाः ॥ एकैक
वृद्धितो ज्ञेया वर्णादीनां गुणाः क्रमात् ॥ विवाहश्शुभदस्तेषां गुणे त्वष्टादशाधि-
धिके ॥ ७१ ॥ अथ जन्म कालिक भौम दोषः ॥ लग्ने व्यये च पाताले यामित्रे चाष्टमे
कुजे ॥ कन्या भर्तृ विनाशाय भर्ता कन्या विनाशकः ॥ ७२ ॥ एवं विधे कुजे
संस्थे विवाहो न कदाचन- ॥ कार्य्यो वा गुण बाहुल्ये कुजे वा तादृशे द्वयोः ॥ ७३॥

सं शि॰ ॥ अथ त्रिविधो विषयोगः ॥ कन्यायां सूर्य्य भौमार्कि वारेषु तिथि भद्रा शता भिधम्
१७४ ॥ अश्लेषा कृत्तिका चेत्स्या त्तत्र जाता विषांगना ॥ ७४ ॥ अथ द्वितीयः ॥ तनु लग्ने
रिपु क्षेत्रे संस्थितः पाप खेचरः ॥ द्वौ सौम्या वपि योगेऽस्मिन्संजाता विष कन्यका
॥ ७५ ॥ अथ तृतीयः ॥ लग्ने शनैश्चरो यस्या स्सुतेऽर्कोनवमे कुजः ॥ विषाख्या सा-
पिनो ह्यास्या त्रिविधा विष कन्यका ॥ ७६ ॥ अथ कन्या दोषापवादः ॥ सावित्र्या दि व्रतं
कृत्वा वैधव्य विनिवृत्तये ॥ अश्वत्थादि भिरुद्वाह्य दद्या त्तां चिरजीविने ॥ ७७ ॥
अथ जन्म कालिक दुष्ट नक्षत्र फलम् ॥ मूलजाश्व शुरं हंति ज्येष्ठाजा स्त्वथ वा गृजम् ॥ क-
न्यका तु विशाखोत्था निहन्या देव रस्त्व कम् ॥ ७८ ॥ अस्यापवादः ॥ अश्लेषा प्रथमः
पादः पादो मूलांति मस्तथा ॥ विशाखा ज्येष्ठ यो राद्य स्त्रयः पादा श्शुभा वहाः ॥
७९ ॥ इति वधू वरयो र्मेलापक विधिः ॥ अथ वाग्दानम् ॥ धरणी देवोऽथ वा कन्यका
सोदर श्शुभ दिने गीत वाद्या दिभि स्संयुतः ॥ वर दाति वरस्त्र यज्ञो पवी तादि नाभ्यर्च

पुते वीन्हि पूर्वांत्रेयेरा चरेत् ॥ ८० ॥ अथ कार्यविशेषे जन्म नाम र्क्षयोः प्रधानता ॥ अ-
ज्ञात जन्म नो नृणां नाम भे परि कल्पना ॥ तेनैव चिंतये त्सर्वं राशि कूटं हि जन्म
वत् ॥ ८१ ॥ जन्म भं जन्म धिष्ण्येन नाम भं नामधिष्ण्यतः ॥ व्यत्ययेन यदा योज्यं न्द
म्पत्योर्निधनं ध्रुवम् ॥ ८२ ॥ देशे ग्राम गृह द्यूत व्यव हारे रणे ज्वरे ॥ दाने मंत्रे च से-
वायां काकिन्यां वर्ग योजने ॥ ८३ ॥ पुनर्भे मेलने ज्ञेया नाम राशेः प्रधानता ॥ अ-
तोन्यत्र विवाहादौ प्राधान्यं जन्म भस्य हि ॥ ८४ ॥ अज्ञात जन्म धिष्ण्ये तु नामभा देव
चिंतयेत् ॥ जाया पत्यो र्भकूटाद्यं गोचरा द्यखिलं तथा ॥ ८५ ॥ एकत्वादिह दम्पत्यो
र्ज्ञाते जन्म भे तथा ॥ जन्म भात्तु गुणाद्यादि मेलनं नाम भात्तयोः ॥ ८६ ॥ अथ विवाह
संवत्सरादि शुद्धिः ॥ गर्भाजन्म दिना द्वापि ह्यय नात्संच मात्परम् ॥ आद्यष्टाब्दं तु कन्याया
विवाहः सम वत्सरे ॥ ८७ ॥ विशेषः ॥ षडब्द मध्ये नो ह्युह्या कन्या वर्ष द्वयं यतः ॥ सो
मो भुंक्ते ऽथ गंधर्व स्ततः पश्चाद्धुताशनः ॥ ८८ ॥ अष्ट वर्षा भवेद्गौरी नव वर्षा- 

च रोहिणी ॥ दश वर्षा भवेत्कन्या अत ऊर्द्धं रजस्वला ॥ ८९ ॥ गौरीन्ददद्ब्रह्म-
लोकं सावित्रं रोहिणी ददत् ॥ कन्यां ददद्ब्रह्मलोक मतः परमसङ्गतिम् ॥ ९० ॥ मासत्रया-
दूर्द्धमयुग्म वर्षे युग्मे तु मास त्रय मेव यावत् ॥ विवाह शुद्धिं प्रवदन्ति सन्तो वात्स्याद-
योगर्गव राह मुख्याः ॥ ९१ ॥ विशेषः ॥ ज्ञेया गुरु बला गौरी रोहिणी भानुमद्बला ॥
कन्या चन्द्र बला ह्यष्टा ततो लग्न बले तरा ॥ ९२ ॥ अथ विवाहे गुरु रवि चन्द्र बलम् ॥
गुरो र्बलन्तु कन्याया वरस्याथ बलं रवेः ॥ ग्राह्यं परिणये प्राज्ञैः बलं चन्द्रात्तयो
भयोः ॥ ९३ ॥ अथ कन्या वरयो गुरु बलम् ॥ कन्याया गृह शुद्धिश्च दश वर्षावधि स्मृ
ता ॥ दश वर्ष व्यतिक्रान्ता कन्या शुद्धि विवर्जिता ॥ ९४ ॥ तस्या स्तारेन्दु लग्नानां
शुद्धो पाणि ग्रहो मतः ॥ जन्म राशे गुरुः श्रेष्ठः पंचमो नवमो द्विगः ॥ ९५ ॥ एकाद-
शः सप्तमस्थः कन्याया श्च वटो र्वतम् ॥ त्रिषट् दशाय गो मध्यो नेष्टस्तु य्यो ऽष्टमो
ऽत्यगः ॥ ९६ ॥ एक या पूजया मध्य स्तुर्य्यो ऽन्त्यो द्वि गुणार्च्चया ॥ कालातिक्रमणे-

...नात् ॥ ९७ ॥ गुरुस्वोच्चेस्व मैत्रे वास्त भे वर्गोत्तमेऽपिवा
...र्मोऽस्त्योऽपि न चारिस्थ श्शुभोप्यसत् ॥ ९८ ॥ वक्रातिचार गोवा
...थास्मिन् राशौ समागतः ॥ तद्राशिजं फलं धत्ते जीवो नो पर राशिजम् ॥ ९९ ॥
कन्यायाः विशेषः ॥ नष्टात्मजा १ धनवती २ विधवा ३ कुशीला ४ पुत्रान्विता ५ पररता
६ सुभगा ७ विपुत्रा ८ स्वामि प्रिया ९ विगत कोपधना १० धनाढ्या ११ वंध्या १२
भवेत्सुरगुरौ क्रमशो विवाहे ॥ १०० ॥ कस्यचिन्मते विशेषः ॥ अष्टमे द्वादशे वापि च-
तुर्थे वा बृहस्पतौ ॥ पूजा तत्र न कर्त्तव्या विवाहः प्राणनाशकः ॥ १०१ ॥ षष्ठे जन्म
नि देवेज्ये तृतीये दशमेऽपिवा ॥ भूरिपूजा पूजितश्च कन्याया श्शुभकारकः ॥ १०२
॥ एकादशे द्वितीये वा पंचमे सप्तमेऽपिवा ॥ नवमे च सुराचार्ये कन्यायाः कथित-
श्शुभः ॥ १०३ ॥ अथ वरस्य रविबलम् ॥ तृतीयः षष्ठगश्चैव दशमैकादश स्थितः
रविःशुद्धो निगदितो वरस्यैव करग्रहे ॥ १०४ ॥ जन्मस्थे च द्वितीयस्थे पंचमे सप्तमेऽ

पिवा ॥ नवमे भास्करे पूजां कुर्य्यात्पाणि गृहोत्सवे ॥ १०५ ॥ चतुर्थे वाष्टमे चैव द्वा
दशे भास्करे स्थिते ॥ वरः पञ्चत्व माप्नोति कृते पाणि गृहोत्सवे ॥ १०६ ॥ कालाति
क्रान्ते विशेषः ॥ रवि स्त्रि षट् दशगा यस्यो वरस्यो द्वाहने शुभः ॥ मध्यः पंच द्वि सप्तैक
नवगः पूजयोत्तमः ॥ १०७ ॥ द्विरर्च्यो द्वादशा स्तुर्य्यो ऽथाष्टम स्त्रि गुणार्च नात् ॥
अथो भयो श्चंद्र वलम् ॥ ग्राह्यं गोगुक्त सुद्वाहे द्वयो श्चांद्रम संवलम् ॥ १०८ ॥ अथ जन्म
मासादि दोषा पवादः ॥ स्वजन्म मास क्षीतिथि क्षणेषु वै नाशिका घस्र गणेषु चैव म
॥ नोद्वाह मात्मा भ्युदया भि कांक्षी नैवाद्य गर्भ द्वितयं कदा चित् ॥ १०९ ॥ जन्म मा
सादि के ज्येष्ठे विवाहो वर कन्ययोः ॥ आद्य गर्भ भवो नेष्टो ना नाद्य जनयो स्तयोः ॥
॥ ११० ॥ त्रिज्येष्ठं नेष्ट मुद्वाहे द्विज्येष्ठं मध्यमं स्मृतम् ॥ क्षत्तिका स्थेरवौ केचि त्त्रिज्येष्ठं
तु शुभं जगुः ॥ १११ ॥ अथ केषां चिन्मते विशेषः ॥ नेष्ठं त्युद्वहनं केचि ज्ज्येष्ठयो स्तु परस्पर
म् ॥ पुत्रो द्वाहात्तु षण्मासान् नो कन्या कर पीडनम् ॥ ११२ ॥ मुंडना न्मुडनं वापि -

कुले सप्तमतोऽन्यथा ॥ सीमन्तोद्वाहनं चौलं केशान्तं व्रतबंधनम् ॥ ११३ ॥ गुरु-
मंगल मे तत्स्यात्तदन्यल्लघुमंगलम् ॥ गुरुमंगलतो नेष्टं षण्मासा लघुमंगलम् ॥
॥ ११४ ॥ शुभत्रयं तथा पित्र्यं कृत्यं स्वीयकुलेन सत् ॥ सहोदरप्रसूतानां भ्रातॄणां-
च समक्रिया ॥ ११५ ॥ षण्मासाभ्यन्तरे नेष्टा कन्यकानां तथैव च ॥ प्रागुक्तं मं-
गलं कुर्य्यादब्दभेदेऽथवा पुनः ॥ ११६ ॥ चतुर्दिनान्तरे वापि संकटे तु दिनान्तरे ॥
एकाहेऽपि प्रकुर्वीत सरित्त्रिगृहान्तरे ॥ ११७ ॥ तथा मण्डपभेदेन लग्नभेदे य-
थोदितं ॥ यमयोस्तु विशेषोऽयं कार्य्यास्सर्वास्सह क्रियाः ॥ ११८ ॥ एकोदरसु-
तस्यैकस्मै कन्याद्वयम् ॥ नदेयं न च देये च सोदराभ्यां सहोदरे ॥ ११९ ॥ वि-
वाहनिश्चयादूर्द्ध्वं कुले वध्वा वरस्य च ॥ पित्रादेर्म्मरणे याते विवाहो न तयोः शु-
भः ॥ १२० ॥ अथवा वत्सरादूर्द्ध्वं मासषट्कादथोऽपिवा ॥ नाशौचे सूतकान्ते वा-
शान्त्या प्रास्तः करग्रहः ॥ १२१ ॥ अथ विवाहे शुभमासाः ॥ मेषवृश्चिककुम्भेषु मक-

सि<br>८०

रे मिथुने वृषे ॥ रवौ पाणि ग्रहः श्रेष्ठः युग्मे विलु श्राया वाधि ॥ १२२ ॥ वैशाखः फा
ल्गुणो माघो ज्येष्ठ श्चैते शुभ प्रदाः ॥ मासा उद्वहने मार्गो नद्यो ऽन्ये त्व शुभा मताः
॥ १२३ ॥ वृश्चिके मकरे मेषे विद्य माने दिवा करे ॥ कार्तिकः पौष चैत्रो वा विवाहे
त्वेव शोभनाः ॥ १२४ ॥ मार्ग शीर्षे धनुष्य र्के मीनार्कः फाल्गुणे शुभः ॥ सौरा
न्नत विवाहा दौ मासः सर्वत्र शस्यते ॥ १२५ ॥ चान्द्रो मासस्तु विंध्याद्रे र्भागे दक्षि
णा के मतः ॥ योग स्तयो र्विवाहा दौ शोभन स्सौर चान्द्र योः ॥ १२६ ॥ अथ विवाहे
तिथि वार नक्षत्राणि ॥ षष्ठी दर्शो ऽष्टमी रिक्ता कृष्ण पक्षान्त्य पञ्च कम् ॥ शुक्ला चेत्प्र
ति पन्नेष्टा तिथयो ऽन्येतु शोभनाः ॥ १२७ ॥ सौम्या वारा श्शुभा मध्या स्सूर्य
मन्द कुजा धमाः ॥ रोहिण्यां त्र्युत्तरे मूले ऽनुराधा रेवती मृगे ॥ १२८ ॥ हस्ते स्वातौ
मघा स्वीरणा शोभनं कर पीडनम् ॥ सत्सूक्षा पूर्व फाल्गुण्यां नो लभेच्छं तत्तो न स
त् ॥ १२९ ॥ पुष्योपि काम योषि त्वा च्छा पमाप प्रजा पतेः ॥ अथ विवाहे दश महा

दोषाः ॥ लत्ता पातो युति र्वेधो या मित्रं वुध पंचकम् ॥ एकार्गलो पग्रहो चन्द्रांति
साम्यं ततः परम् ॥ १३० ॥ दग्धा तिथिं च विज्ञेयं दश दोषा महा वलाः ॥ एतान्दो-
या न्परि त्यज्य लग्नं संशोधयेद्बुधः ॥ १३१ ॥ अथ लत्ता ॥ नक्षत्रं द्वादशं भानुस्तृ-
तीयं लत्तया कुजः ॥ षष्ठ ज्जीवोऽष्टमम्मन्दो हन्ति दक्षिण तस्सदा ॥ १३२ ॥ वामे-
न सप्तमं चान्द्री नवमे सिंहिका सुतः ॥ हन्ति भं पंचमं शुक्रो द्वादशं पूर्ण चन्द्रमाः
॥ १३३ ॥ रवे र्लत्ता हरे द्वित्तं कुजस्य कुरुते क्षतिम् ॥ वृहस्पते र्वन्धु नाशं शनेः कु-
र्य्यात्कुल क्षयम् ॥ १३४ ॥ वुधस्य कुरुते त्राणं लत्ता राहो र्विना शनम् ॥ शुक्र-
स्य दुःखदा नित्यं त्राश दा च कला निधेः ॥ १३५ ॥ अथ पातः ॥ सूर्य्य युक्ताश्च नक्ष-
त्रा देयु पातो विधीयते ॥ मघा श्लेषा च चित्रा च सानुराधा च रेवती ॥ १३६ ॥ श्र-
वणोपि च षड्ज्ञेयं पात दुष्टं निगद्यते ॥ अश्विनी मवधिं कृत्वा गणये ल्लग्न मा वधिं
॥ १३७ ॥ पावकः प व मान श्च विकारी कलहो परः ॥ मृत्युः क्षय श्च विज्ञेयः

पात षड्कस्य लक्षणम् ॥ १३८ ॥ पातेन पतितो ब्रह्मा पातेन पतितो हरिः ॥ पाते-
न पतित श्शम्भु स्तस्मा त्पातं विवर्जयेत् ॥ १३९ ॥ अथयुतिदोषः ॥ यत्र राशौ
भवेच्चन्द्रे ग्रह स्तत्र यदा भवेत् ॥ युति दोष स्तदा ज्ञेयो विना शुक्र श्शुभा शुभः ॥
१४०॥ रविणा संयुतो हानि भौमेन निधनं शशिनः ॥ कुर्वन्ति मूल नाशं च राहुके
तु शनै श्चराः ॥ १४१ ॥ अथवेधः ॥ वधू प्रवेशने दाने वरणे पाणि पीडने ॥ वेधः
पंच शलाकाख्यो ऽन्यत्र सप्त शलाककः ॥ १४२ ॥ रेखाः पंचोर्द्ध गास्तिर्य ग्द्वे द्वे
रेखे च कोणयोः ॥ चक्रं पञ्च शला काख्यं विवाहे वेध साधनम् ॥ १४३ ॥ दूज्ञा
द्वितय रेखा तस्सा भिजि त्कृत्तिका दिकम् ॥ लिखे त्सव्य क्रमा त्तत्र ग्रहा देया यथाय
थम् ॥ १४४ ॥ एकरेखा स्थितो विद्धा दिन नाथा दयो ग्रहाः ॥ विवाहे तत्र मासंतुन
जीवति कदाचन ॥ १४५ ॥ अश्विनी पूर्व फाल्गुण्या भरणी चानुराधया ॥ अभि-
जिच्चापि रोहिण्या कृत्तिका च विशाखया ॥ १४६ ॥ मृगा श्चोत्तर षाढेन पूर्वाषाढान- ९८

धार्द्र्या ॥ पुनर्वसुश्च मूलेन तथा पुष्यश्च ज्येष्ठया ॥ १४७ ॥ धनिष्ठया तथाश्ले-
षा मघापि श्रवणेनच ॥ रेवत्युत्तर रोहिण्या हस्ते नोत्तर भाद्र पात् ॥ १४८ ॥ स्वा-
त्या शत भिषा विद्धा चित्रया पूर्व भाद्र पात् ॥ विद्धान्येतानि वर्ज्यानि विवाहे भानि-
को विदैः ॥ १४९ ॥ रवि वेधेच वैधव्यं कुज वेधे कुल क्षयः ॥ बुधवेधे भवेद्वंध्या प्रव-
ज्या गुरु वेधतः ॥ १५० ॥ अपुत्रा शुक्र वेधेच सौरे चन्द्रे चदुःखिता ॥ परपुरुषरता
राहौ केतौ स्वच्छन्द चारिणी ॥ १५१ ॥ अथ यामित्र दोषः ॥ चतुर्दशं च नक्षत्रं यामित्रं
लग्न भात्स्मृतम् ॥ शुभ युक्तं तदिच्छंति पाप युक्तं च वर्जयेत् ॥ १५२ ॥ चन्द्रश्चान्द्री
शुक्रजीवौ यामित्रे शुभ कारकम् ॥ स्वर्भानु भानु मंदारा यामित्रे चाशुभ प्रदाः ॥
१५३ ॥ चंद्राद्वा लग्नतो वापि ग्रहा वर्ज्याश्च सप्तमे ॥ तत्र स्थिता ग्रहा नूनं व्याधि वै-
धव्य कारकाः ॥ १५४ ॥ अथ बुध पञ्चकम् ॥ धार्य्या तिथि १५ मास १२ दस्रा २०९ ८
वेदा ४ संक्रान्ति तो जात दिने प्रत्त योज्याः ॥ गृहे विभक्ता यदि पञ्चके स्या द्रोगास्त- 

याग्नि नृपचौर मृत्युः ॥ १५५ ॥ अन्यच्च ॥ तिथि वार भलग्नानां कोरसा ग्न्यङ्गा-
ष्ट वेद युक् ॥ नन्दाप्तपंच शेषे रुक् वन्हि राट् चौर मृत्यु कृत् ॥ १५६ ॥ शेषे के-
नव भि र्भक्ते पंच शेषे स शल्यके ॥ अथ दाक्षिणात्यप्रसिद्ध पंचकं ॥ शुक्लाद्यास्तिथयो
याता लग्नाख्या भाजिता ग्रहैः ॥ शेषे ष्ट द्वि चतुस्तर्क भूमिते बाण पंचकं ॥ १५७
रोगोग्नि र्नृपति श्चौरो मृत्यु श्चेति यथा क्रमात् ॥ प्रसिद्धं दाक्षिणात्यानां शुभे का-
र्ये विवर्ज्जयेत् ॥ १५८ ॥ रोगं चौरं त्यजे द्रात्रौ दिवा राजन्य पंचकम् ॥ संध्य
यो र्मृत्यु दं त्याज्यं सर्वदा वन्हि पंचकम् ॥ १५९ ॥ रवौ रोगं कुजे वन्हिः शनौ
च नृप पंचकम् ॥ वर्ज्यं पुनः कुजे चौरं बुध वारे च मृत्यु दम् ॥ १६० ॥ नृपा-
ख्यं नृप सेवायां गृह गोपेऽग्नि पंचकम् ॥ याने चौरं व्रते रोगं त्यजे न्मृत्यु कर
ग्रहे ॥ १६१ ॥ लग्ने पूर्णा बलो पेते न दोषः पंच कस्यच ॥ १६१ ॥ अथैकार्गल दो-
षः ॥ योगांके विषमे सैके साष्टा विंशति के समे ॥ तदर्द्धं संख्य भं मूर्द्धि चक्रे ९०

संवि खार्जूरि के न्यसेत् ॥ १९२॥ अथैतस्योदाहरणं ॥ व्यतीपाते भ मश्लेषाख्या
२८५ घाते च पुनर्वसुः ॥ श्रति गंडे नुराधाच मूर्द्धि भं परिघे मघा ॥ १९३ ॥ विष्कुंभे-
चाश्विनी पुष्यो वज्रे चित्रातु वैधृतौ ॥ तथा मूले श्रुगे गंडे मूल भं मूर्द्धि कीर्तितं ॥
१९४ ॥ योगेष्वेतेषु संभूतिर्नान्येष्वेकार्गलस्य च ॥ अथैतस्यचक्रम् ॥ एका चोर्द्ध
गता रेखा तिर्यक् कार्यास्त्रयोदश ॥ मूर्द्धिभं मूर्द्धि विन्यस्य साभिजित्तत्ततो न्य-
सेत् ॥ १९५॥ एकार्गलो मिथ श्चैक रेखा गश्चेद्धि धूरविः ॥ विवाहादि शुभे कार्ये
नेष्ट स्त्वेकार्गलाभिधः ॥ १९६ ॥ अथोपग्रह दोषः ॥ सूर्य्यभात्पंचमे विद्युन्नक्षत्रेष्ट-
ल मष्टमे ॥ चतुर्दशे शनेः पातः केतु रष्टादशे तथा ॥ १९७ ॥ ऊनविंशे भवेद्दु-
ल्कानिर्घातश्च द्वाविंशतौ ॥ अथो विंशति केकंपश्च तु र्विंशे च वज्रकः ॥ १९८ ॥
दिक् सप्त तिथि तत्त्वाख्य स्वर्ग संख्यानि भानि च १०।७।१५।२४।२१ ॥ एता-
न्यपि जगुश्चोपग्रह क्षाणीति केचन ॥ १९९ ॥ पुत्र नाशकरी विद्युच्छूलः पुत्र वि- २८५

सं.चि नाशकः ॥ शनेः शनो वंश घातः केतोर्दैवर नाशकः ॥ १७०॥ द्रव्यनाश करी
१८६ चोल्का निर्घातो बंधुनाशकः ॥ कंपः कंपयते नित्यं वज्रे स्त्री व्यभिचारिणी ॥ १७१
॥उपग्रहेषु लग्नायां तथा चंडायुधा न्हये ॥ ग्रहोऽस्ति यत्र भागांश्चो विद्धांशास्त
त्प्रमाणकः ॥ १७२॥ अथक्रांतिसाम्यदोषः ॥ ऊर्द्ध्व स्तिस्त्र स्तिरस्त्रि लो मध्ये मीनं लिखे
द्बुधः ॥ सूर्य्यचन्द्रमसो दृष्टि क्रांति साम्यं निगद्यते ॥ १७३ ॥ मीनः कन्यकया
युक्तो मेषः सिंहे न संगतः ॥ मकरे च वृषः क्रांतिः चापोऽपि मिथुने न च ॥ १७४
कर्क वृश्चिकयो वेधो वेधश्च तुलकुंभयोः ॥ क्रांति साम्ये कृतो द्वाहे न जीवति कः
दाचन ॥ १७५ ॥ अथदग्धा दोषः ॥ द्वितीया धन मीने च चतु
र्थी वृषकुंभयोः ॥ मेषकर्कटयोः षष्ठी कन्यायां मिथुनेऽष्टमी ॥
१७६ ॥ दशमी वृश्चिके सिंहे द्वादशी मकरे तुले ॥ एतास्तु तिथ-
यो दग्धा शुभे कर्म्मणि वर्ज्जिताः ॥ १७७ ॥ अथदग्धदोषाः ॥ १८६

| | | | |
|---|---|---|---|
| | ११ | १२ | १ |
| १० | क्रां | ति | २ |
| ९ | सा | म्यं | ३ |
| ८ | ७ | ६ | ५ ४ |

तिथ्यंश वेदैक दिगून विंशा स्तन्यं भवाश्च दश विंश संख्याः ॥ दृष्टो डुना सूर्ययुत्तो
डुना च योगा दमी चेद्दश योग दोषाः ॥ १७८ ॥ महन्मे घाग्नि भूपाल चौर मृत्यु रु-
जो शनिः ॥ कलि र्हानि र्दशो द्वाहे दोषा स्त्याज्या सदा बुधैः ॥ १७९ ॥ योगां
के विषसे सैके समे सव सुलोचने ॥ इत्ती कृत्वाश्विनी पूर्वं दश योग मुदा हृतम् ॥
१८० ॥ दश योगे महा चक्रे ग्रमा दाद्यदि विध्यते ॥ क्रूरे सौम्य ग्रहे वापि दंपत्यो रे-
क नाशनं ॥ १८१ ॥ अथ दश दोषापवादः ॥ गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्न केंद्र गे ॥
दश दोषा विनश्यंति यथाग्नौ तूल राशयः ॥ १८२ ॥ गुरुणा भृगुणा वापि संयुतो
दृष्ट मेव च ॥ दश योग समा युक्त मपि लग्नं शुभा वहम् ॥ १८३ ॥ एका र्गलोप ग्रह
पात लत्ता या मित्र कर्तर्य्युदया स्तदोषाः ॥ नश्यन्ति चन्द्रार्क वलोप पन्ने लग्ने यथा
कभ्युदये तु दोषाः ॥ १८४ ॥ उप ग्रह र्क्षं कुरु वाल्हि केषु कलिंग वंगेषु च पाति
त तम्भम् ॥ सौराष्ट्र साल्वेषु चलत्ति तं भंत्यजं तु विद्धं किल सर्व देशे ॥ १८५ ॥

भि लत्ता मालव केदेशे पातः कोशल के तथा ॥ एकार्गलन्तु कस्मीरे वेधं सर्वत्र व-
८८ र्ज्जयेत् ॥ १८६ ॥ युति दोषो भवेद्गौडे यामित्र स्स तु यामुने ॥ वेधदोषस्तु विंध्या
ख्ये देशे नान्येषु केचन ॥ १८७ ॥ अथापरः यमघंट योगः ॥ शैला ७ श्रुतयः सूर्ये ७।
५।४। चन्द्रे षट् ६ वेद ४ पर्वताः ॥ ७ ॥ भौमे वाणा ५ ग्नि ३ नेत्राणि २ सौम्ये
वेदा ४ क्षि २ वायवः ५ ॥ १८८ ॥ गुरु वारे ग्नि ३ चंद्रे १ आः ८ शुक्रे नेत्रा २ द्रि ७
वन्हयः ३ शनौ चन्द्रे १ भ ८ तर्काः ६ स्युः कुलिको यमघंटकः ॥ १८९ ॥ अ-
र्द्ध प्रहर संज्ञां स्तान्मंगलेषु विवर्ज्जयेत् ॥ निधनं प्रहरार्द्धे तु निस्सत्वं यमघंटके ॥
कुलिके सर्व नाशः स्यात् रात्रा वेतेन दोषदाः ॥ १९० ॥ अथ कर्त्तरी दोषः ॥ द्रविणा
व्यययो १२ लग्ना च्चन्द्रा द्वापापखेचरौ ॥ यदि स्यातां तदा ज्ञेया कर्त्तरी दोषकारि
का ॥ १९१ ॥ अथ महाकर्त्तरी ॥ धने क्रूर ग्रहो वक्री व्यये मार्गी भवेद्यदि ॥ सा महा-
कर्त्तरी ज्ञेया प्रयत्नात्तां विवर्ज्जयेत् ॥ १९२ ॥ अथ दोषापवादः ॥ धने मार्गी व्यये व- २२८

मि श्री वक्रौ वा मार्गगावु भौ ॥ लग्ने वा द्वादशे सौम्यो यदि चेत्कर्त्तरी नसा ॥ १२९३ ॥
२८ शुक्र जीव बुधैः केन्द्र कोणगैः सा न दुःखदा ॥ कर्त्तरी कालिका या सौ शत्रु नीच र्क्षगो
यदि ॥ १२९४ ॥ अथ वास्तास्तितो तत्र न दोषः कर्त्तरी भवः ॥ अथा परे दोषाः ॥ मर्म्म वेधः कं
कश्च शल्यं छिद्रं चतुर्थ कम् ॥ एत द्दोषं चतुष्कंच परित्याज्यं प्रयत्नतः ॥ १२९५ ॥
लग्ने पापे मर्म्म वेधः कंटको नव पञ्चमे ॥ चतुर्थे दशमे शल्यं छिद्रं भवति सप्तमे ॥
१२९६ ॥ मरणं मर्म्म वेधेस्यात् कंटके स्यात्कुल क्षयः ॥ शल्येच न्हपते भीतिः पुत्र
नाशश्च छिद्रके ॥ १२९७ ॥ मासान्ते दिन मेकं तु तिथ्यन्ते घटिका द्वयम् ॥ नक्ष-
त्रान्ते घटी त्रीणि विवाहादौ विवर्ज्जयेत् ॥ १२९८ ॥ अथ नक्षत्र विष घटिकाः ॥ खवा-
णाश्च जिना स्त्रिंशा खवेदा मनवः क्रमात् ॥ स्वर्गस्त्रिंशा न्नखा दन्ताः खरामा विंश

| अ | भ | कृ | रो | मृ | आ | पु | पु | श्ले | म | पू | उ | ह | चि | स्वा | वि | अनु | ज्ये | मू | पू | उ | श्र | ध | श | पू | उ | रे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ५० | २५ | ३० | ४० | १४ | २५ | ३० | २० | ३२ | ३० | २० | १८ | २१ | २० | १४ | १४ | १० | १४ | ५६ | २४ | २० | १० | १० | १८ | १६ | २४ | ३० |

१८८९

ति धृतिः ॥ १९९ ॥ भूनेत्राः खयमाः शक्राः मनुका श्चाश्च तुर्दश ॥ षट् पञ्चाश-
ज्जिनाश्चैव विंशति श्च ककुप् दिशः ॥ २०० ॥ धृति र्भूपा जिनास्त्रिंशद् द्विभा
द् घटिकाः स्मृताः ॥ आभ्यश्च तुष्टयं त्याज्यं घटिकानां विषाभिधम् ॥ २०१ ॥
सर्वर्क्ष घटिका भिश्च प्रोक्त र्क्ष घटिका हृताः ॥ षष्ट्या भक्ताःस्फुटा नाड्य स्तथा स्यु र्वि-
ष नाडिकाः ॥ २०२ ॥ अथ तिथि विष घटिकाः ॥ तिथि वाराग ह सप्ता गु पञ्च वेदाग
धराः ॥ दिग्वन्ह्यर्क मनुस्ता भूह्र स्वो घटिकाः क्रमात् ॥ २०३ ॥ आभ्यो घटी च-
तुष्कञ्च विषंप्राति पदादितः ॥ अथ वार विष घटिकाः ॥ न ख युग्मार्क दिक् सप्त वाराण
त्वमिताः क्रमात् ॥ आभ्यो नाडी चतुष्कंच विषनाड् विवासरात् ॥ २०४ ॥ ति-
थि विष नाडिका चक्रम् ॥ सुबोधनार्थम् ॥ अथ वार विष घटी चक्रम् ॥ अथ विष नाड़ी दोषापवादः ॥

| | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | ०० | र | चं | मं | बु | वृ | शु | श | |
| १५ | ५ | ८ | ७ | ६ | ५ | ४ | ६ | ७ | १० | ३ | १२ | १४ | ७ | ८ | ०० | २० | २ | १२ | १० | ७ | ५ | २५ | |

मं गि। कोण ९।५ स्त्रा७ ध्वि४ नभः १० संस्थः सुहृत्सौम्ये क्षितोऽपि वा ॥ सद्राशगवा
१२७ विधुः स्वांशे लग्ने वा केन्द्र १०।१।४।७। कोणगः ९।५।॥ २०५॥ निहन्याद-
खिलं दोषं विष नाडी समुद्भवम् ॥ अथ ग्रह दृष्टिः ॥ तृतीये दशमे पादे त्रिको-
णेऽघ्रि द्वयं ग्रहः ॥ पश्येत्तुर्येऽष्टमे पाद त्रयं पूर्णन्तु सप्तमे ॥ २०६॥ पूर्णन्तु त्रिदशे
मंदः पंचमं नवमं गुरुः ॥ भौमोष्टमं चतुर्थञ्च सप्तमं सकला ग्रहाः ॥ २०७॥ अथ लग्न
शुद्धिः ॥ लग्ने लग्न लवे वापि लग्नांशेश युते क्षिते ॥ लवेश शुभ मित्रेण दृष्टे वा स्वामिना
शुभः ॥ २०८॥ द्यूनांशे द्यून लग्ने वा द्यूनांशे शयुतेक्षिते ॥ द्यूनांश पति सन्मित्र दृष्टे व
ध्वा शुभं स्मृतम् ॥ २०९॥ लग्नेशो लग्न मंशेशाः स्वांशं पश्यति वा मिथः ॥ तद्वरस्य
शुभ ज्ञेय मन्यथा नैव शोभनम् ॥ २१०॥ द्यूनेशेशाः तथा स्वांश पति द्यूनांशमीक्षते
॥ तन्मिथो वा तथा वध्वाः शुभन्त्वितर थानहि ॥ २११॥ नीच राशि गते शुक्रे शत्रुक्षे-
त्र गते पि वा ॥ भृगु षष्ठ स्थितो दोषो नास्ति तत्र न संशयः ॥ २१२॥ अस्तगे नीच गे भौ- १२९

मे रन्तु क्षेत्र गते ऽपिवा ॥ कुजाष्टमोद्भवो दोषो न किंचिदपि विद्यते ॥ २१३ ॥ गुरुरेको
ऽपि केन्द्रस्थः शुक्रो वा यदि वा बुधः ॥ हरेत्स्मृति र्यथा हंति तद्दोषास्त्रिकोणगाः ॥ २१४
लत्तोपग्रह चण्डीश चन्द्र या मित्र सम्भवान् ॥ तत्केंद्रगो गुरुर्हन्ति सुपर्णः पन्नगानिव ॥
२१५ ॥ सक्रूर राशे रशुभो नवांशः प्रोक्तस्स पापोऽपि विलग्न संस्थः ॥ त्रिकोण केन्द्रेषु
गुरुः सितो वा यदा तदा सोव शुभोऽपि शस्तः ॥ २१६ ॥ यत्रैकादशगः सूर्य्यो दोषानाशं
ययुस्तदा ॥ स्मरणा देव रुद्रस्य पाप जन्म शतोद्भवम् ॥ २१७ ॥ वर्गोत्तम गते लग्ने स-
र्वे दोषा लयं ययुः ॥ चन्द्रो वाप्यथ वाये ऽपि गीष्मे तु शरितो यथा ॥ २१८ ॥ मुहूर्त्ते ल-
ग्न षड्वर्ग कु नवांश ग्रहोद्भवाः ॥ ये दोषास्तान्निहन्त्येव यत्रैकादश गः शशिः ॥ २१९
॥ नक्षत्र दोषं कु नवांश दोषं गंडांत दोषं च मुहूर्त्त दोषम् ॥ विरुद्ध पंचांग विरुद्ध दोषं
निशाकरो लाभ गतो निहंति ॥ २२० ॥ त्रिकोणे केन्द्रे वा मदन रहिते दोष शतकं हरे
त्सौम्य श्शुक्रो द्विगुण मपि लक्षं सुरगुरुः ॥ भवे दाये केन्द्रेंग प उप लवे शो यदि तदा

शि
२३

समूहं दोषाणां दहन इव तूल प्रमयाति ॥ २२१ ॥ अथ पङ्ग्वंधादित्याज्यलग्नानि ॥ दिने सदा न्या वृष मेष सिंहाः रात्रौ च कन्या मिथुनं कुलीरः ॥ मृगास्तु लाली वंधिरो पराह्णे संध्या सु कुब्जा घट धन्वि मीनाः ॥ २२२ ॥ दिवान्धो वर हंताच रात्र्यंधा धन नाशकाः ॥ दुःख दो वधिरो लग्नः कुब्जो वंश विनाशकः ॥ २२३ ॥ अथ होलाष्टकम् ॥ शुक्लाष्टमीं समार भ्य फाल्गुणस्य दिनाष्टकम् ॥ पूर्णिमा मवधिं कृत्वा त्याज्यं होलाष्टकं शुभे ॥ २२४ ॥ ऐरावत्यां विपाशायां शतद्रौ च त्रिपुष्करे ॥ होलाष्टकं विवाहादौ त्याज्य मन्यत्र शोभन म् ॥ २२५ ॥ राभ्रायो मास शून्याश्च लग्नं काणांध पंगुयत् ॥ तत्त्याज्यं मालवे गौडे ना न्यत्रा शुभदं स्मृतम् ॥ २२६ ॥ हन्या दिनार्द्धजन्सोयं तिथि स्तिद्वा वनोद्भवम् ॥ गुरुः केन्द्र गतः शून्य तिथिजे लाभ ग प्रशुभः ॥ २२७ ॥ अध्यायन तु मासोत्थाः पक्ष निष्यु क्त संभवाः ॥ काणांध वधिरो भूता दग्ध लग्न तिथे भवाः ॥ २२८ ॥ अकाल जाश्च नी हार विद्युत्पाताभ्र संभवाः ॥ परि वेष मती सूर्य्य शक्र चाप ध्वजा दयः ॥ २२९ ॥ दोष

१२३

प्रदा मंगलेषु कालजाश्चेन्न दोषदाः ॥ वृषभो वृश्चिको मीनः कन्या मकरकर्कटाः ॥
२३० ॥ लग्ने ष्वेतेषु नो दोषो जन्म नोह्य शुभे ष्वपि ॥ अथ शुभनवांशाः ॥ कन्या युग्म तुला
धन्वि नवांशाः शुभदा ग्रहाः ॥ विवाहे न्येतु मीनस्य नवांशाः शुभदा जगुः ॥ २३१॥
अथ भंगदा ग्रहाः ॥ लग्ने शने श्वरः सूर्यो लग्नारि निधने पापी ॥ लग्ने ऽष्टमे मही सूनुरष्ट-
मे बुधवाक्पती ॥ २३२॥ राहुस्तुर्ये विलग्ने वा निधनारि गतो भृगुः ॥ द्यूने तु खेचरास्स
र्वे विवाहे भंगदाः स्मृताः ॥ २३३॥ कुजः खे द्वादशे मन्दो लग्ने शो निधनारिगः ॥ तृ-
तीये भार्गवश्चन्द्रो व्यये नैते ऽपि शोभनाः ॥ २३४॥ अथ रेखाप्रदा ग्रहाः ॥ आयाष्ट षट्
सुर विकेतु तमो ऽर्क पुत्राः त्र्यायारिगः क्षिति सुतो द्वि गुणाय गो ज्ञः ॥ सप्त व्ययाष्ट रहि-
तौ द्व गुरू सितोष्ट त्रि द्यून षट् व्यय गृहान्य रिहन्य शस्तः ॥ २३५॥ अथ दिनज्ञानम् ॥ छा
या पादे रसो पेतो एक विंश शतं भजेत् ॥ लब्धां के घटिका ज्ञेया शेषां के च पलाः
स्मृताः ॥ २३६ ॥ अथेष्टकालाल्लग्नायनम् ॥ सायनार्कस्य भवानि निजोदय विनाडिकः

म शि
२५५

रवित्रि भक्ता भवेद्भोग्य कालो लब्ध पलात्मकः ॥ २३७ ॥ सोध्यो ऽभीष्ट घटीभ्यश्च
तद ग्रभ निजोद्यः ॥ प्रोध्याः शेष खरा मग्रान शुद्ध तिथि भाजितम् ॥ २३८ ॥ ल-
ब्धमं ग्रादिकं योज्यं मेषादौ शुद्ध राशिभिः ॥ अयनांश विहीनाय विलग्नं तत्स्फुटं
भवेत् ॥ २३९ ॥ भोग्य कालेन शुद्धिश्चेदिष्ट कालः पलात्मकः ॥ खरा मग्नो हृतस्ती
योदये नाखिल वादिकम् ॥ २४० ॥ योज्यं सूर्ये स्फुटं लग्न मयनांश विवर्ज्जितः ॥
रात्रीष्ट कालतो वापि सषड्भार्काच्च पूर्ववत् ॥ २४१ ॥ अथास्पष्ट लग्नादिष्ट काल ज्ञानम् ॥
भानो र्भोग्य स्तुयः कालो भुक्त काल स्तथा तनोः ॥ तदैक मेतयो र्मध्ये ह्युदयाद्यं सम-
य स्स्फुटः ॥ २४२ ॥ यद्येक र्क्षेतु लग्नार्कौ तयो र्भागान्तरे हृतः ॥ स्वीयोदयः ख-
रा माप्तो ऽभीष्ट काल स्फुट स्तदा ॥ २४३ ॥ अथप्रशस्तयोगः ॥ शुभै स्तनुगतैः खेटै र
शुभै र्निधनो पगैः ॥ ध्वजोयं परिणीतात्र युवती प्रिय वल्लभा ॥ २४४ ॥ कुजेऽ
र्के लाभ गे वध्ये शनौ चन्द्रे द्वितीयगे ॥ धर्मस्थे खेचरै रन्यैः श्रीवत्सो योग उत्तमः ॥

धनुर्मृगेशाः ॥ वृषश्च कन्या मकरोऽथ वैश्यः शूद्रा तुला युग्म घटा भवान्ति ॥ ९७ ॥ स्या
त्याङ्मुखं ब्राह्मण राशि सद्म चोदङ्मुखं क्षत्रिय राशि कानाम् ॥ वैश्यार्कजानां यम दिङ्मु
खं हि शूद्राभिधाना मथ पश्चिमं स्यात् ॥ ९८ ॥ अथ द्वारविचारः ॥ पूर्वाण्यैशानान्याग्नेय दक्षि
णानी यात् ॥ द्वाराणि नैऋत्यादीनि पश्चिमानि वायोश्च ॥ ९९ ॥ अथ पूर्वादि दिक्षु द्वाराणां फलम्
अनल भयं १ सुतजन्म २ धनता ३ नरेन्द्र तो लाभः ४ क्रोध परता ५ न्हतत्वं ६ क्रौर्य्यं ७ चौ-
र्य्यं च ८ पूर्वेण ॥ १००॥ अल्प सुतत्वं १ प्रैष्यं २ नीच त्वं ३ भक्ष्यपानाप्तिः ४ ॥ रौद्रं ५ कृतघ्न ६
मधनं ७ सुत वीर्य्य घ्नं च ८ याम्येन ॥ १०१॥ सुत पीडा १ रिपु वृद्धिः २ धन सुताप्ति ३ स्समस्त-
गुण संपत् ४ ॥ धन संपत् ५ नृपति भयं ६ धन नाशः ७ रोग ८ मृत्येव धन वंधो ॥ १०२॥ वंधो १
रिपु वृद्धि २ र्द्दन सुत लाभः ३ समस्त गुणं संपत् ४ ॥ पुत्र धनाप्ति ५ वैरं ६ सुतेन दोष ७ स्त्रियो
ने मलम् ८ ॥ १०३ ॥ अथैशान्यादि चतुर्ण फलानि ॥ दुःखं १ शोको २ धना प्तिश्च ३ नृप पूजा ४ म-
हद्धनम् ५ स्त्री जन्म ६ पुत्रता ७ हानिः ८ प्राच्यां द्वार फलानि च ॥ १०४॥ निधनं १ वंधनं २ भीतिः

मु॰
९२ २ पुत्राप्तिश्च ४ धनागमः ५ यशोलब्धिर्दशोरभयं ७ व्याधिर्भीतिश्च दक्षिणे ॥ १०५॥ नष्टव
स्त्री दूषणं चैव लक्ष्मी प्राप्ति ईनागमः ॥ सौभाग्यं धनलाभश्च दुःखं शोकश्च पश्चिमे ॥
१०६॥ भ्रातृ वृद्धिर्म्महद्दुःखं हानि स्सस्य स्सुखा गमः ॥ प्राप्तिर्दुःखं भ्रातृ बाधा चोत्तरस्यां दि
शि क्रमात् ॥ १०७॥ अथ संक्रांतिफलेन गृहद्वारनिश्चयः ॥ कुंभेऽर्के फाल्गुणे मासे श्रावणे कर्क
सिंहयोः ॥ पौषे नक्रे गृहं कुर्यात्पूर्व पश्चिम दिङ्मुखम् ॥ १०८॥ मार्गे तुलालिगे भानौ वैशाख
वे वृषभाजयोः ॥ दक्षिणोदङ्मुखं श्रेष्ठं मंदिरं नेष्टमन्यथा ॥ १०९॥ पूर्णिमातोऽष्टमी या
वत्पूर्वास्यं वर्ज्जयेद्गृहम् ॥ उत्तरास्यं न कुर्वीत नवम्यादि चतुर्दशी ॥ ११०॥ अमायाश्चाष्ट
मी यावत्पश्चिमास्यं विवर्ज्जयेत् ॥ नवम्यादौ दक्षिणास्यं यावच्छुक्लचतुर्दशी ॥ १११॥ न
व भागं गृहं कुर्यात्पंच भागांश्च दक्षिणे ॥ त्रिभागमुत्तरे त्याज्यं शेषं द्वारं विनिर्दिशेत् ॥ ११२॥
तिथिं पंचगुणी कृत्य नामाक्षरयुगैर्युतम् ॥ शिवनेत्रैर्हरेद्भागं शेषांके फलमादिशेत् ॥
११३॥ एकेन लभते राज्यं द्वितीये सुखसंपदः ॥ शून्ये च मरणं प्रोक्तं गृहारंभे विशेषतः ॥ ११४॥ ३९

शि अथ गेहारंभे लग्नविचारः ॥ द्विस्वभावे स्थिरे लग्ने शुभैर्व्ययाष्टत्यागे ग्रहैः ॥ पापैस्त्र्यायारिगैः कु-
१५ र्य्यान्मन्दिरारंभणं बुधः ॥ १०५ ॥ अथ गेहारंभे शुभयोगः ॥ लग्ने गुरौ रवौ षष्ठे द्यूने चन्द्रे भा-
र्गवे सुखे ॥ मन्दे त्रिगे कृतं तिष्ठेन्मन्दिरं शरदां शतम् ॥ १०६ ॥ ततः शुक्रे सहोत्थेऽ
र्के षष्ठे भौमे सुते गुरौ ॥ समारब्धं गृहं तिष्ठेद्धायनानां शतद्वयम् ॥ १०७ ॥ सूर्ये लाभ
गते शुक्रे तनौ नभसि चन्द्रजे ॥ भोगं वर्षशता पुण्यं निर्मितं नृपौर्भवेत् ॥ १०८ ॥ चतु-
र्थे वाक्पतौ लाभे भौमे मन्दे च विद्विषोः ॥ अशीति हायना पुण्यमारब्धं मन्दिरं स्थितम्
॥ १०९ ॥ शुक्रे स्वोच्चे तनौ वापि जीवे पातालगेऽथवा ॥ लाभगे वा शनौ स्वोच्चे संपद्यु-
क्तं चिरं गृहम् ॥ ११० ॥ लग्नस्थे स्वर्क्षगे चन्द्रे केन्द्रे जीवेऽथ खेचरैः ॥ स्वोच्चमित्रांश-
गैर्गेहं लक्ष्म्यायुक्तं स्थिरं भवेत् ॥ १११ ॥ अथ नेष्टयोगः ॥ नीचांशस्थे तथा खेटे निर्मि-
तं मन्दिरं त्वितत् ॥ खेटस्वे को हिबुके द्यूने परांशस्थोऽष्टमध्यगः ॥ ११२ ॥ कुर्य्याल्लग्नं
पराधीनं लग्ने क्रोधे यदि निर्बलः ॥ अथ नक्षत्रग्रहवशाद्विशेषयोगः ॥ पूर्वाषाढोत्तरा पुष्ये मूले

सं.शि धारोहिण्श्रवे स्तृगे ॥ जीव युक्ते गुरोर्वारे गेहो राज्यार्थ पुत्रदः ॥ २१३ ॥ विशाखाद्री
३०५ निष्ठाश्वि धृत चित्रा स्थिते भृगौ ॥ भृगु वारे कृतं वेश्म धन धान्य सुत प्रदम् ॥ २१४
॥ पूर्वाषाढा मघा हस्त पुष्य मूलान्त्यगे कुजे ॥ कुजेऽह्नि निर्म्मितं गेहं भस्म साद्वह्निना
भवेत् ॥ २१५ ॥ उफा हस्ताश्विनी चित्रा रोहिणी मृगगे बुधे ॥ बुधेऽह्नि मंदिरा रम्भः
सुख पुत्रार्थ सिद्धये ॥ २१६ ॥ भरणी स्वात्यनूराधा ज्येष्ठा पूभा द्वये शनौ ॥ शनि वारे
कृतं वेश्म रक्षो भूत युतं भवेत् ॥ २१७ ॥ मेषे चैत्रे वृषे ज्येष्ठे आषाढे कर्कटे रवौ
॥ सिंहे भाद्र पदे तौलि नाश्विने कार्त्तिकेऽलिगे ॥ २१८ ॥ पौषे नक्रे तथा माघे मक-
रे कुंभगेऽपि च ॥ प्रकुर्य्यान्मंदिरं विद्वान्नान्यैः कैश्चिदितीरितम् ॥ २१९ ॥ कृष्ण-
पक्षादयो मासा विज्ञेया ह्यत्र सूरिभिः ॥ अथ गृहारंभसमयस्थार्क मास फलं ॥ शोको धा-
न्यं मृति पशु हृती द्रव्य वृद्धि विनाशो युद्धं भृत्यक्षति रथ धनं श्रीश्च वन्हेर्भयंच ॥
लक्ष्मी प्राप्तिर्भवति भवनारंभ कर्त्तुः क्रमेण चैत्राद्युक्ते मुनिभिरिति फलं वास्तु शा- ३०५

ां शि स्त्रोपदिष्टम् ॥ १२० ॥ त्यक्त्वा चतुर्दशी षष्ठी चतुर्थी सप्तमी समास्‌ ॥ नवमीं च रविं भौ-
३०६ मं गृहारंभो विपंचके ॥ फलंच ॥ दारिद्र्यं प्रतिपत्कुर्य्याच्चतुर्थी धनहारिणी ॥ अष्ट-
म्युच्चाटनं चैव नवमी शस्त्रघातिनी ॥ १२१ ॥ दर्शे राजभयं ज्ञेयं भूते दारविनाशन-
म् ॥ १२२ ॥ विपंचके इति ॥ रुगनल नृपचोरमृत्यु सञ्ज्ञक पंचक रहिते ॥ पुष्ये स्वरो ऽनु-
राधायां धनिष्ठा युगलोत्तरे ॥ हस्तत्रये च रोहिण्यां रेवत्यां गृहमारभेत् ॥ १२३ ॥ सू-
तिका मन्दिरं कुर्य्यात्पुनर्भे ऽभिजि ति श्रवे ॥ १२४ ॥ अथभूमिसुप्तम् ॥ मघोत्तनान्यंच-
न गांक सूर्य्यन वेन्दुष हिंष्ट्रा मितानि भानि ॥ शेते महीनैव गृहं विधेयं तडाग वापीख-
ननं न शस्तम् ॥ १२५ ॥ अथगृहारंभेवत्सचक्रम् ॥ शीर्षे वृषेगोह विधाविनक्षत्रदाहो ऽ-
ग्नि सिद्ध्याभिरग्रपादे ॥ शून्यं युगैः पश्चिम पादजाते स्थैर्य्यं गुरोः पृष्ठगते ऽर्द्धना-
प्तिः ॥ १२६ ॥ लाभो युगे दक्षिण कुक्षि याते पुच्छे ऽग्निभिस्स्वपते र्विनाशः ॥ वा-
मयुगे निर्द्धनता च कुक्षौ पीडा च पत्युर्स्सुरवगे स्त्रिभिश्च ॥ १२७ ॥ अथेतदेव पुनः स्पष्टी ३०

क्रियते ॥ रविभात्सप्तनेष्टानि शुभान्येकादशाष्टभात् ॥ दृशाश्चेषाश्च निष्टानि साभिजिद्ध्रु-
व वास्तुनि ॥ १२८ ॥ अथ खातम् ॥ अधोमुखैर्भैर्विदधीत खातं शिलास्तथैवोर्द्ध्वमुखैश्च पट्ट-
म् ॥ तिर्य्यङ्मुखैर्द्वारिकपाटयानं गृहप्रवेशो मृदुभिर्ध्रुवर्क्षैः ॥ १२९ ॥ अथ सौरसाङ्केद्वारे वा-
स्तोर्मुखपुच्छं कटिश्च ॥ वृषार्कादित्रयं वेदा सिंहादिगणयेद्गृहे ॥ देवालये च मीनादि तडा-
गे मकरादिकम् ॥ १३० ॥ ईशानतः सर्प्यति कालसर्प्पो विहाय सृष्टिं गणयेद्विदिक्षु ॥
शेषोऽस्य वास्तोर्म्मुखमध्यपुच्छं त्रयं परित्यज्य खनेच्चतुर्थम् ॥ १३१ ॥ कन्यासिंहेतु-
लायां भुजगपतिमुखं शम्भुकोणेऽग्निखातं वायव्ये स्यात्तदास्य त्वलिधनमकरे दृश्य-
खातं वदंति ॥ कुंभे मीने च मेषे नि र्ऋति दिशि मुखं खातवायव्यकोणे चाग्नेःकोणे मुख-
वै वृषमिथुनगते कर्कटे रक्ष खातम् ॥ १३२ ॥ ऊर्द्धभागत्रयं त्यक्त्वाप्यधोभागत्रयं तथा ॥
मध्ये षोडशकस्थाने खननं तत्र शोभनम् ॥ १३३ ॥ अथ चान्द्रमासात् द्वारनिश्चयार्थं वास्तुशि-
रः ॥ खाते भाद्रपदादास्तु ऽक्रमान्मासत्रिषुत्रिषु ॥ भाग्याशादिशिरो गेहात् द्वारं शीर्षं दि-

स.मि. स्मिस्सृतम् ॥ १३४ ॥ वास्तो प्रशीर्षे दिशो ज्ञेयं पुच्छं सम्मुख दिग्गतम् ॥ अथवास्तोर्नाभि

५०८ कुक्षौ खाते शंकुरोपणम् ॥ अष्टाविंशति कान्भा स्तु पुच्छात्सप्त दशां स्त्यजेत् ॥ १३५ ॥ त्र्य-

शो त्वष्टादश खात वाम भागे च मध्यतः ॥ गेहारंभे मुहूर्ते ऽन्नश कुर्यात्वास्म पूरणम् ॥

१३६ ॥ चतुर्हस्त प्रमाणान्तु खात्वा गर्त्तं समं ततः ॥ कुंभो दके शोच येयुः शान्तिपाठ पुर

स्सरम् ॥ १३७ ॥ ततईशान दिग्भागे साक्षत रत्न पंचकम् ॥ साज्यं कुंभ स्थिरं कृत्वा वा

स्तु पूजन पूर्वकम् ॥ कुम्भो परिशिला न्यासः कर्त्तव्य स्तदनन्तरम् ॥ १३७ ॥ अथ द्वार शा-

खारोपः ॥ अश्विन्या मुत्तरा हस्त पुष्य श्रुति मृगे ध्रुवे ॥ रोहिण्यां स्वाति भे त्येच द्वार शाखा

प्ररोपयेत् ॥ १३८ ॥ अथ द्वार चक्रम् ॥ सूर्य भा द्वेद भे शीर्षे स्थिते श्च धन संपदः ॥ गेह-

स्यो द्वासनं तस्मा दष्टभिः कोण संस्थिते: ॥ १३९ ॥ शाखा स्वष्ट मिते स्तस्मा द्भुजं सौख्यं

भवे द्गृहे ॥ देह ल्यान्तु त्रिसि द्विसे मृत्यु र्गृह पते र्भवेत् ॥ १४० ॥ चतुर्भिर्मध्य गे स्तस्मा-

द्द्रव्य लाभः स्सुखं भवेत् ॥ एतच्चक्रं विचार्य्यादौ द्वारं कुर्य्या त्स्वमन्दिरे ॥ १४१ ॥ कस्यचि- ३०८

न्मते विशेषः ॥ छतः कराब्धि युग्मनेत्र संत कश्च वारिधिः कर स्वसुद्द सूर्य्य भादिन र्क्षांतस्त-
तः क्रमात् ॥ धनागमं विनाश सौख्य बंधनं मृतिः स्थितिः शुभं न स त्सुख भदं क्रमात् फलं वि-
च क्षणैः ॥ २४२ ॥ अथ गवाक्ष निर्णयः ॥ पूर्वोदितान्य गास्ता सुगवाक्षान्दि सु कारयेत् ॥
अथ द्वारस्यातिर्य्यग्लग्ननिर्णयः ॥ आयामे नवधाभक्ते द्वारमेकां शमा नतः ॥ प्राच्यां तुर्य्ये तृती-
ये वारुद्र कोणा द्विधीयते ॥ २४३ ॥ याम्यां षष्ठे च तुर्ये वा तुरीये ऽ थ पंचमे ॥ उदीच्यांम्वा
मती च्यां वा सव्य मार्गेण धीमता ॥ २४४ ॥ अथ द्वारस्योच्चता ॥ गेहोच्चस्य चतुर्थांशो हि गु-
णो द्वार उच्छ्रयः ॥ अथगेहोच्चता ॥ विस्तार षोड शे भागश्च तुर्भिर्य्यः करैर्युतः ॥ गेहो-
च्चं तन्मितं ज्ञेयं न्यूनाधिक्यमसत्स्मृतम् ॥ २४५ ॥ विस्तार तुल्य प्रमितिं गृहस्य चोच्छ्राय
ताम्यं न्तर भूप्रदेशात् ॥ गृहोपरि स्थस्य गृहस्य तद्द्विस्तार हस्तोच्छ्रयता विधेया ॥
२४६ ॥ अथ द्वारदेवेध विचारः ॥ कोण मार्ग भ्रमि द्वार कर्द मस्तंभभूरुहाम् ॥ देवालय प्रकू-
पाणां वेधो द्वारे ऽ थ सम्मुखे ॥ २४७ ॥ अथ वेधापवादः ॥ गेहोच्च द्विगुणाधिके प्रान्तरे सति 

सति ॥ नैव कोणादिको वेधो भित्ति मार्गान्तरेऽपि च ॥ १४८॥ फलम् ॥ कूपे नाशमाप्नोति
भवति विनाशो देवता विद्धे ॥ स्तंभेन स्त्री दोषः कुल नाशो ब्रह्मणोऽभि मुखे ॥ १४९॥
उन्मादस्स्वय मुद्घटिते ऽथपि हिते स्वयं कुल विनाशः ॥ माना धिक्येन भयं व्यसनदं भी-
ति र्न्नीचे ॥ १५० ॥ द्वारं द्वारस्यो परि यत्नन्न शिवाय शंकवायच ॥ अनिलिन्नः सुभद्र
यं कुब्जः कुल नाश नाय भवति ॥ १५१ ॥ पीडाकरमति वितत्तं अति न्यूनभवेद भवाय
॥ वाह्ये विततप्रवाशो दिग्यास्ये दस्युभिः पीडा ॥ १५२॥ ईशाना दिषु कोणेषु संस्थि-
ता वाह्यतो गृह स्यैताः ॥ चरकी विदारिनामाथ पूतना पाप राक्षसी चेति ॥ १५३॥ पूजि-
ता शान्ति दादे व्यो मत्स्य मांसाश वादिभिः ॥ अन्यदा विघ्नकारिण्यो वासिनांतु विना-
बलिम् ॥ १५४ ॥ अथायगण ज्ञानम् ॥ आंगणा याम विस्तारा वेकी कृत्य गृहे भजेत् ॥ भो-
गी १ विचक्षणो ऽभीरुः ३ कलही ४ दान ५ वान्नृपः ६ ॥ १५५ ॥ क्लीव ७ श्चौरो ८ धनी
९ चेति क्रमान्नव फलं त्विदं ॥ अथव्रव विचारः ॥ उदगादि व्रव मित्थं विप्रादीनां दक्षिणे नै-

व ॥ १५६ ॥ अथ षोडशगृहनिर्म्माणम् ॥ प्राचीतः क्रमतस्नानपाकःशय्या च शस्त्रभु॥
भोजनस्यान्नभांडारदेवतानां गृहं स्मृतम् ॥ १५७ ॥ मथनाज्यपुरीषाख्यविद्याभ्या-
सं भुवां क्रमात् ॥ रतिभैषज्ययोः सर्वधाम्नस्तन्मध्यगा गृहाः ॥ १५८ ॥ अल्पत्वे वा मु-
वोऽग्राक्ते स्नानादीञ्च गृहान्बुधः ॥ प्रांते भुवोऽनुसारेण प्रकुर्वीत यथारुचि ॥ १५९ ॥ उ-
लूखलघटाद्यं वु स्थानं चुल्ह्यादिकं ततः ॥ क्षालनं पितृपादानां गेहा दक्षिणतस्सदा ॥
१६० ॥ अथ चित्रारंभः ॥ हस्तत्रयेऽनुराधान्त्ये मृगेऽश्विन्यां श्रवत्रये ॥ पुनर्भे रोहिणी
पुष्ये पूर्वाषाढाभिधे तथा ॥ १६१ ॥ नंदायां च शुभे वारे प्रकुर्य्याद्राजवेश्मनि ॥ चित्रं-
नानाविधं रम्यं शिल्पी रामायणं विना ॥ १६२ ॥ अथ गेहोपस्करणचुल्हीकलम् ॥ पूर्वाद्रा
रोहिणी पुष्ये उत्तरात्रितये श्विभे ॥ स्थितिर्मृद्भाजनस्यैष्या गेहोपस्करणे स्तुहू ॥ १६३ ॥
सूर्य्यर्क्षाद्रसभे वेधो नृपसुखं वेदर्क्षसंख्या सुखम् ॥ ताराञ्चाष्टमितारमाक्षि रुभयोश्चु-
ल्ह्यां सदा प्रोक्तयोः ॥ मध्ये पंच भवेद्गृहे प्रारम्भो नाशोऽग्निके चाब्धयस्ततं स्यात्सततं

विचार्य्य मतिमान् चुल्हीं गृहे स्थापयेत् ॥ २६४ ॥ अथ गृहसमीप फलम् ॥ सचिवालये ऽर्थनाशो धूर्त्तगृहे सुतवधः सभीपस्थे ॥ उद्वेगो देवकुले चतुःपथे भवति चाकीर्त्तिः ॥ २६५॥ चैत्ये भयं गृहं कृतं वल्मीके स्वकुले विपदम् ॥ गर्त्तायां तु पिपासा कूर्म्माकारे धननाशः ॥ २६६ ॥ अथ गृहांगणे शुभवृक्षाः ॥ पुंनागश्चंपको ऽशोकः पिप्पली दाडिमी शमी ॥ वकुलस्तिलको द्राक्षा पिचुमंदो ऽमराजपाः ॥ २६७॥ नारिकेलं तथा जाती पाटला गेहमल्लिका ॥ मल्लिका पूग बंधूकाः पनसः सरसीरुहम् ॥ २६८ ॥ एते गृहांगणे वृक्षाः आरोप्या मंगलप्रदाः ॥ अथ गेहप्रदेशनतिदिशि वृक्षारोपणम् ॥ न्यग्रोधं रोपयेत्प्राच्यां गेहाद्याम्यामुदुंबरम् ॥ उदक् प्लक्षं च कंर्कधुः प्रतीच्यां कुंजरासनम् ॥ २६९ ॥ अथ गृहांगणे अशुभवृक्षाः ॥ मातुलुंगस्नुहीरंभा हरिद्रा च वसद्रुमः ॥ एते दुःखप्रदा गेहे संजाता रोपिता अपि ॥ २७० ॥ अथ केषांचिन्मते सर्वे ऽपि वृक्षा अंगणे निषिद्धाः ॥ केचिद्वृक्षं न चारोप्यो निजवासगृहांगणे ॥ को ऽपि वृक्षो यतः स्वर्णद्रुमो ऽपि न शुभो मतः ॥ २७१ ॥ अथ मुरजस्य

प्राकारादीनां निर्म्माणे सूत्र साधनम् ॥ आकार पत्तन ग्रामनिर्म्मितौ सूत्र साधनम् ॥ प्रशस्ते-
स्याच्छुभे काले गेहारम्भोक्तभादिषु ॥ १७१, अथ देवालये मठाद्यारंभः ॥ गृहारंभोक्त-
नक्षत्रैर्मठं कुर्य्यात्तु साग्विभैः ॥ सर्वदेवालयन्तेस्तु पुनर्भश्रवणान्वितैः ॥ १७२ ॥
अथ जैन्यालय प्रपादीनामारम्भः ॥ पूर्वाद्र्राभरणीधिष्ण्ये रोहिण्यां च स्थिरे द्वये ॥ सुभाह्वे जै-
न्यगेहस्य प्रपादय्योः कृतिश्शुभा ॥ १७३ ॥ अथ कूपखनन प्रदेशाः ॥ ऐश्वर्य्यं पुत्रहानि-
श्च स्त्रीनाशो निधनं भवेत् ॥ संपच्छस्त्रुभयं सौख्यपुष्टिः प्रागादितः क्रमात् ॥ १७४ ॥
कूपे कृते मध्य देशे धनहानिर्हि वास्तुनि ॥ अथ जलाशयारंभः ॥ अनुराधा मघा हस्ते रे-
वती धूत्तरा त्रये ॥ रोहिणी युगले पुष्ये धनिष्ठा द्वितये तथा ॥ १७५ ॥ पूर्वाषाढाभि-
धे भेच शुभे मासि शुभे दिने ॥ वापी कूप तडागानामारंभः कथितो बुधैः ॥ १७६ ॥
अथ कूपारंभे वार फलम् ॥ रवि वारे जलं नास्ति सोमे पूर्णं जलं भवेत् ॥ वालुका भौमवारेतु
बुधे बहु जलं भवेत् ॥ १७७ ॥ गुरौच मधुरं तोयं शुक्रे क्षारं प्रजायते ॥ शनौ श्चरे जलंना-

सं.शि त्ति कीर्त्तितं वारजं फलम् ॥ १७८॥ रोहिरावर्क्षाच्छ्रीमभात्सूर्य्यभाच्च राहोऽर्कक्षाद्गणय
३२४ ते कूपचक्रम् ॥ यस्मिन्काले सर्वमेतत्प्रशस्तं तस्मिन्भूमौ निर्जले सज्जलत्वम् ॥
१७९॥ अथ रोहिण्यृक्षात्कूपचक्रम् ॥ रोहिण्यादिलिखेच्चक्रं यावत्तिष्ठति चंद्रमाः ॥ एकंम-
ध्ये त्रयं पूर्वेत्त्रयं चाग्निकोणके ॥ १८० ॥ याम्ये तु वाणसंख्यं स्यान्नैर्ऋत्ये रसमेवच
॥ पश्चिमे युगलं वायौ युग्मं च त्रयमुत्तरे ॥ १८१ ॥ ईशाने त्रीणि दातव्यं ब्रह्मऋक्षादनु
क्रमात् ॥ मध्ये शीघ्रं जलं स्वादु पूर्वे भूमौ च खंडनम् ॥१८२॥ आग्नेय्यां सजलं प्रोक्तं
याम्ये च निर्जलं भवेत् ॥ नैर्ऋत्ये सजलं प्रोक्तं पश्चिमे क्षारमेवच ॥ १८३ ॥ वायव्ये चै-
व पाषाणमुत्तरे च समुद्रवत् ॥ ईशाने कटुकं वारि कूपचक्रं विचारयेत् ॥१८४॥ अथ भौ-
मभात्कूपचक्रम् ॥ शशिशरेषु त्रिद्वाब्धि गुणाब्धयः . वधजलं च सुसिद्धिरभंगरस॥रु-
जमसिद्धि यशोऽर्थप्रसिद्धिदं जलविभंगकरः कुजभादिति ॥ १८५॥ अथ सूर्य्यभात्कूपच-
क्रम् ॥ सजलखंडजले सजलाजले शुभजलं लवणं च शिलाजलम् ॥ लवणमुत्क- ३२

राहुभादिति नवकलानि विदुस्त्रिनयोर्दुभिः ॥ १८६॥ अथ राहुभात्कूपचक्रम् ॥ राहुऋक्षा-
त्त्रयम्पूर्वं त्रयमग्नौ ततः क्रमात् ॥ मध्ये चत्वारि देयानि फलं वाच्यं शुभाशुभम् ॥ १८६॥
पूर्वे शोक करो राहुः अग्नेय्यां जलसंपदा ॥ दक्षिणे स्वामि मरणं नैऋत्ये दुःखदायकम्
॥ १८७॥ पश्चिमे सजलं प्रोक्तं वायव्ये वालुका तथा ॥ उत्तरे निर्जलं वारि ईशाने च स-
मुद्रवत् ॥ १८८॥ मध्ये स्वल्प जलं वाच्यं नान्यथा रुद्रभाषितम् ॥ अथ जलज्ञानम् ॥ नक्ष-
त्र वारे तिथि संप्रयुक्तो वेदाहतन्न हरणेकेनकार्य्य॥एकावशिष्टे च जलं हि नागे द्वाभ्यांश्च
घोषे सलिलं हि स्वर्गे ॥ त्रिशून्यशेषे भुवि संस्थितो यं प्रजापतीनां खनने जलाशय॥१८९
अथ कूपे निर्झरविचारः ॥ वर्त्तमान तिथि वार तारका वारि राशि सहिता वसूद्धृता ॥ शेष तुल्य-

| रोहिणपूर्व्वात् २७ | भोमभात् २७ | सूर्य्यभात् २७ | राहुभात् २८ |
|---|---|---|---|
| दि ३ अ २ अशु ३ शु | अशु ४ १ शु ५ शु | अशु ३ ३ अशु ३ शु | ३ अशु ३ अशु ३ शु |
| ध ३ शु शु म ना ६ | शु ३ ५ शु | शु ३ शु २ ३ अशु | ३ अशु ४ अशु ३ अशु |
| वा २ अ शु ५ ३ ने | अशु ४ २ अशु ३ अशु | अशु ३ अशु ३ ३ अशु | ३ अशु ३ शु ३ शु |

दिशि पूर्वतः क्रमान्निर्झरो भवति
कूप कर्म्मणि ॥ १९० ॥ अश्वि-
न्या दो शशि र्यत्र तिथि भिश्च स

सं.शि. मन्वितम् ॥ चतुर्भिस्तु हरेद्भागं शेषांके फलमादिशेत् ॥ १९६१॥ एके जलाशयं विद्या-
३९६ त् द्विके पातालमेवच ॥ त्रिभिः क्षारं विजानीयाच्छून्ये शून्यं विनिर्दिशेत् ॥ १९६२ ॥ अथ
नेवारिचक्रम् ॥ निर्वारे पूर्ववत्त्रीणि त्रीणि च सव्यतः ॥ मध्ये च त्वादि धिष्ण्यानि गणनाद्
णायेद्बुधः ॥ १९६३ ॥ मध्ये पूर्वे जलं सौख्यमुत्तरे धनवर्द्धनम् ॥ याम्यनैरृत्ययोर्दुःखं अप
मग्नौ परे कावृम् ॥ १९६४ ॥ अथेष्टकारंभः सुधालेपश्च ॥ उत्तराभिश्रवे पुष्ये ज्येष्ठान्ये रो-
हिणी करे ॥ स्थिरेऽङ्केऽर्के गुरौ मन्दे इष्टिकारम्भणं चरेत् ॥ १९६५ ॥ तथा गेहे सुधाले-
पः इष्टिकारंभणादिषु ॥ १९६६॥ अथ इष्टिकाचक्रम् ॥ इष्टिचक्रं प्रवक्ष्यामि भौसनक्षत्र
प्रयत्नतः ॥ पंचत्रीणि त्रिके पंच सप्तपंचावनी. जभात् ॥ १९६७॥ शुभाशुभं क्रमेणै-
व इष्टिका स्थापने मतम् ॥ अथाग्निदानम् ॥ सप्त पञ्च मुनि वेद पंचभिः शोकलाभरु-
जभीति सुखाप्तिः ॥ स्थापनेऽग्नि किल इष्टिका गृहे भौम आदिति वुधाः प्रवदन्ति ॥
१९६८ ॥ अथ तडागचक्रम् ॥ सूर्यभाच्चन्द्रभं यावद्गणयेत्सर्वदा वुधः ॥ दिक्षु दिक्षु द्वयं ३९६

न्यस्य मध्ये पञ्च नियोजयेत् ॥ १९९ ॥ पदं चवारवाहच्च फलं तस्य विचारयेत् ॥ पूर्वस्यां वारि शोषं स्यात् आग्नेय्यां सलिलं बहु ॥ २०० ॥ दक्षिणस्यां वारिनाशो नैरृत्यां मसृणं जलम् ॥ पश्चिमायां जलं स्वादु वायव्यां वारि शोषणं ॥ २०१ ॥ उत्तरस्यां स्थितं तोयमैशान्यां कुत्सितं जलम् ॥ मध्ये पूर्णं जलं दुग्धं वारि चामृतमेव च ॥ २०२ ॥ तडागेषु सर्वेषु चक्रमेतद्विचारयेत् ॥ द्विवेदि कुलसंभूत शरयू कृतसंग्रहे ॥ शिरोमणौ समाप्तेयं प्रभेयं विंशाति प्रशुभा ॥ २०३ ॥ इति श्री संग्रहशिरोमणौ वास्तुकथनं नाम विंशतिः प्रभा ॥ २० ॥ अथ गृहप्रवेशप्रकरणम् ॥ प्रवेशो नवगेहस्य कुर्य्यात्सौम्यायने नृपः ॥ आरम्भो दितमासे ऽपि कृत्वा प्राग्वास्तुपूजनम् ॥ १ ॥ माघफाल्गुनयोश्चैव ज्येष्ठे शस्तो नवे गृहे ॥ प्रवेशे श्रावणे मार्गे कार्त्तिके ऽपि प्रशस्यते ॥ २ ॥ पुनर्विनिर्म्मिते जीर्णे गृहे युक्तस्तथैव हि ॥ प्रवेश स्त्वात्र गेहस्य प्रास्तादि अविचारणात् ॥ ३ ॥ त्र्युत्तरे चानुराधायां रेवत्यां रोहिणीद्वये ॥ चित्रायां प्रविशेद्गेहं हारभे तु विशेषतः ॥

४ ॥ द्वारभेति ॥ यस्मिन्गृहे प्रवेशः कर्तुमिष्यते तस्यय स्यान्दिशि मुखं तद्दिङ्नक्षत्रैः पूर्वादिषु चतुर्दिक्षु सप्त सप्तानल सत दत्या युक्तैः मृदु ध्रुव नक्षत्रैः प्रवेशो नं स्यात् ॥ यदि गृहार् मंदिरंतादृ गृक्षे रुक्त क्षैः स्यात्स प्रवेशो न सर्वै रिति वशिष्ठोक्तेः ॥ अर्कानिला-र्यादिति दस्र विस्नु नरक्ष प्रविष्टं नव मंदिरं यत् ॥ अब्दत्रया त्तत्पर हस्त याते शेषेषु धि-ष्ण्येषु च मृत्यु दं स्यात् ॥ ५ ॥ अथ जीर्ण गृह प्रवेशः ॥ धनिष्ठा द्वितये पुष्ये त्युत्तरे रोहिणी द्वये ॥ चित्रा स्वात्यानुराधान्त्ये प्रवेशो जीर्ण मन्दिरे ॥ ६ ॥ अथ प्रवेशे अन्य नक्षत्र फलम् ॥ श्रवणा दित्रये ऽश्विन्यां स्वातौ पुष्ये तथा करे ॥ पुनर्वस्वोः पुनर्यात्रा राजा नाशो शताभिधे ॥ ७ ॥ पूर्वा त्रये भरण्यां च विशाखायाम्च भूक्षयः ॥ ज्येष्ठा श्लेषा ख्य मूलार्द्रे कुमारो नाशमाप्नुयात् ॥ ८ ॥ कृत्तिकायां गृहे प्रवेशो नव मन्दिरे ॥ तथा यात्रा निवृत्तो च भूपानां फलमीदृशम् ॥ ९ ॥ अथ वार फलम् ॥ गुरु शुक्र वुधाख्येषु वासरेषु सुखार्थदम् ॥ प्रवेशे तु शनौ स्थैर्यं किञ्चि चौर भयम्भवेत् ॥ १० ॥ वशिष्ठः ॥ नव प्रवेशे ह्यथ काल शुद्धिर्न हन्द

... क्षप ... प्रवेशं पंचांगादिन सु लग्न वास्तु पूर्ववत् देव कुर्य्यात् ॥
११ ॥ नित्य याने गृहे जीर्णे प्राशने परिधानके ॥ वधूप्रवेशे मांगल्ये न मौढ्यं गुरु शुक्र-
योः ॥ १२ ॥ अथ प्रवेशे त्याज्यः ॥ चैत्रो मासः कुजार्कौ च रक्ता दग्धा तिथिस्त्वमा ॥ दुष्ट च
न्द्रा दृक्से वर्ज्या न व गेह प्रवेशने ॥ १३ ॥ अथ लग्नबलम् ॥ चरे लग्ने चरांशे च प्रवेशो न शु-
भानहः ॥ शुभांशेन युते चोपचय स्थेऽपि चरेऽपि सत् ॥ १४ ॥ शुभैः केंद्र त्रिकोणा यदि
गैराय त्रिषष्टगैः ॥ पापैश्शुद्धेऽष्टमे तुर्य्ये रवि र्जन्माष्टमेंग के ॥ १५ ॥ शुभे भकूट केगे-
हे विधायाचे द्विजन्मनः ॥ जल पूर्ण घटं दीपं वेद घोषै र्गृहं विशेत् ॥ १६ ॥ रन्ध्रात्सुत्रा-
द्ध नादाया त्पंच स्व र्के स्थिते क्रमात् ॥ पूर्वा शादि मुखं गेहं विशे द्वामो भवे यदि ॥ १७ ॥
अष्टम पंचम द्वितीये काद्श स्थानेभ्यः पंच सु स्थानेषु स्थिते रवौ सति शा ग्वद नादि मंदि
र प्रवेशे कर्तुर्वामो रविर्ज्ञेयः ॥ यथा ॥ यस्मिन् लग्ने गृह प्रवेशः कर्तुं क्रियते तस्मादष्टमं
तत्स्थानं ततः पंच सु स्थानेष्वर्के सति पूर्वाभि मुखे गृहे प्रवेशः कर्तुः वाम स्तूर्य्यः स्यात् ॥

८४ तथा लग्नात्पंचम स्थानं ततः पंच सु स्थानेषु रवौ स्थिते दक्षिणाभिमुखे वामोऽर्कः ॥
३९ तथैव लग्नाद्द्वितीय स्थानं ततः पंच सुस्थानेषु रवौ स्थितः पश्चिमाभिमुखे वामोऽर्कः
तथैव लग्नाद्देकादश स्थानं ततः पंच सुस्थानेषु सूर्ये स्थिते उत्तराभिमुखे गृहे प्रवे-
श कर्त्तु र्वामः सूर्यः ॥ अथ गृह द्वारवशान्निर्णयः ॥ प्रवेशे प्राङ्मुखे पूर्णानन्दा याम्यमुखे
शुभा ॥ भद्रा प्रत्यङ्मुखोऽथोदङ्मुखे गेहे तथा जया ॥ १८ ॥ अथ गेहे तत्प्रवेशे च विशेषः ॥
वेश्म कृत्यं दिवा शस्तं प्रवेशो रजनौ क्वचित् ॥ सतीन्द्वर्कबले यात्रा द्वादश्यां न भृगौ नि-
शि ॥ १९ ॥ अथ गृहप्रवेशे कलशचक्रम् ॥ अर्कभाद्भूमिते १ चक्रे वन्हि दाहः प्रवेशने ॥ उद्वा
सोऽब्धिमितैः ४ प्राच्यां याम्यां लाभोऽब्धि ४ संमितैः ॥ २० ॥ पश्चिमेऽब्धिमिते १९ लक्ष्मीर
द्वंद्व मितैः १७ कलिः ॥ नाशो युग मिते २१ मध्येऽधः कण्ठे त्रि २४ त्रिभैः २७ शुभम् २१ ॥
अथ तदेव स्पष्टयति ॥ भान्यष्टौ ८ सूर्यभात्पश्चाद्द्वाविंशाच्चैव भानि षट् ६ ॥ कुम्भचक्रे वरिष्ठा
नि गेहं प्रविशतां नृणां ॥ २२ ॥ अथ प्रवेश विधिः ॥ यथोक्तसमये प्राच्यां वितानैस्तोरणैर्यु- १२७

तम् ॥ वेद मंगल निर्घोषै स्संप्रविश्य गृहं शुभम् ॥ २३ ॥ शिल्पितं गणात [illegible]
धि विद्वं पुरोधसम् ॥ पूजयेच्च यथा देवं हेम रत्नै स्तथाम्बरैः ॥ २४ ॥ कृत्वागतो द्वि
ज वरानथ पूर्णं कुंभं दध्य क्षताम्र दल पुष्प फलोपशोभम् ॥ दत्वा हिरण्य वस-
नानि तथा द्विजेभ्यो मांगल्य शान्ति निलयं स्वगृहं विशेच्च ॥ २५ ॥ गेहोक्त होम
विधिना बलि कर्म्म कुर्य्यात् प्रासाद वास्तु शमने च विधिर्य उक्तः ॥ सन्तर्प्पयेद्द्विज
वरानथ भक्ष्य भोज्यैः शुक्लां वरः स्वभवनं प्रविशेत्स्व रूपम् ॥ २६ ॥ अथ प्रवेशस्त्रि-
विध. ॥ अपूर्व संज्ञः प्रथम प्रवेशो यात्रावसाने तु स पूर्व सञ्ज्ञः ॥ द्वन्द्वाभयस्त्व ग्नि-
भयादिजात स्त्वेवं प्रवेश स्त्रिविधः प्रदिष्टः ॥ २७ ॥ आरम्भोदितभैर्भूपैः कार्यो पूर्व प्रवे-
शकः ॥ पूर्वा पूर्वोऽश्विनी मूल श्रवो पेतैः कर स्थितैः ॥ २८ ॥ स पूर्वस्तूत्तरा चित्राऽनु-
राधा रेवती मृगे ॥ रोहिण्यां कथितः प्राज्ञैः प्रवेश स्त्रि विधो गृहे ॥ २९ ॥ अथ वास्तु पूजादि
कं विना प्रवेशे निषेधः ॥ यद्गृहस्तु पूजा रहितं त्व दत्त बलिं त्वनाच्छन्न गृहं विरूपं ॥ कपाटही-

अधि नं न विशेद्य नत्न त्सर्वां पदा मालय मेव तत्स्यात् ॥ ३० ॥ अथ वास्तुपूजनम् ॥ श्रवाश्व-
३५१ ये मृगे मूलेऽनुराधान्त्ये करत्रये ॥ पुनर्भेऽप्युत्तरे पुष्ये रोहिण्यां मण्डिभे तथा ॥ ३१
॥ वास्तोरभ्यर्च्चनं शस्तं बलिदान पुरस्सरम् ॥ अथ नव दुर्ग पुर प्रवेशः ॥ रोहिणी रेवती ह-
स्त त्रये पुष्ये श्रवत्रये ॥ अनुराधोत्तरे नव्ये पुरे दुर्गे प्रवेशनम् ॥ ३२ ॥ अथ जितस्य शत्रोः
पुरे प्रवेशः ॥ विशाखा कृत्तिका पूर्वा त्तरा षाढभिधे तथा ॥ शत्रोर्ज्यायां जितस्यारे वि-
जयी नगरं विशेत् ॥ ३३ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरोमणौ स मा-
तैषा प्रमेयं चैक विंशतिः ॥ ३४ ॥ इति श्री संग्रह शिरोमणौ गृह प्रवेश कथनं ना
म एक विंशतिः प्रभा २१ ॥ अथ देवालयादि प्रतिष्ठा प्रकरणम् ॥ आश्रा रामयोः कार्य्या प्रतिष्ठा
चोत्तरायणे ॥ तथा जलाशया रामोत्सर्ग प्रशस्तो विचैत्रके ॥ १ ॥ चैत्रो मासः प्रति
ष्ठायां वुधैः कैश्चिद् इतीरितः ॥ शुक्ल पक्षेऽनुराधान्त्ये पुनर्भे रोहिणी मृगे ॥ २ ॥ श्र-
वत्रयो त्तरा हस्त त्रये पुष्ये विधौ शुभे ॥ स्ववार क्षण नक्षत्र तिथिषु स्थापनं स्मृतम् ॥ ३

३॥ विष्वादि देव मुख्यानां विलग्ने शुभ लोकिते ॥ अथ देवता विशेषेण नक्षत्र विशेषः ॥ वि-
३३ ष्णोः पूर्वोदिते मैत्रानुराधा शिवयोः शिवम् ॥ रोहिण्यां श्रवणे ज्येष्ठा पुष्ये चाभिजि-
दीरितम् ॥ ४ ॥ विधि वासवयो स्तम्य क्प्रतिष्ठा पनमार्य्यकैः ॥ ५ ॥ भानोर्हस्ते ऽनु-
राधायां कुवेर स्कन्दयोरपि ॥ मूले दुर्गादि कानांच श्रवणे सुगतस्य हि ॥ ६ ॥ रेवत्यां ध
र्म्म हेरंव फणि प्रथम राक्षसाम् ॥ यक्ष भूता सुराणाञ्च वाग्देव्याः स्थापनं स्मृतम् ॥ ७
व्यासाग स्त्य वराहाणाञ्च वाल्मीके पुष्यभे तथा ॥ यत्र सप्तर्षयो यान्ति धिष्ण्ये ते षाञ्च तत्र
च ॥ ८ ॥ सर्वेषा मेवरो हिण्या मुत्तरा त्रितये तथा ॥ धनिष्ठायान्दि गीशानां प्रतिष्ठाप-
नमीरितम् ॥ ९ ॥ अथ देवविशेषे लग्न विशेषः ॥ सिंहे सूर्य्यः शिवो द्वन्द्वे लग्ने स्थाप्यस्त्रि
यां हरिः ॥ कुम्भे वेधा श्चरे क्षुद्राः सौम्ये देव्य स्स्थिरे ऽखिलाः ॥ १० ॥ गण परि वृढ रक्षो
यक्ष भूता सुराणां प्रथम फणि सरस्वत्या दि कानांच पौले ॥ श्रव सि सुगत नाम्नो ब्रा-
सर्वे लोकपानां निगदित म खिलानां स्थापनं हि स्थिरेषु ॥ ११ ॥ अथ चार फलम् ॥ प्रति-

२५२

छाया तथा क्षेमा वन्हि दां वरदा दृढा ॥ आनन्द दायिनी कल्प स्था थिन्य कादि वा सरे
॥ १२॥ अथ देव विशेषेण मासस्थनम् ॥ याम्या यनेऽपि वाराह मातृ भैरव वामनान् ॥ महि
षासुर हन्त्रीं च नृसिंहं स्थापयेद्बुधः ॥ १३ ॥ विशेषः॥ श्रावणे स्थापये ल्लिंग माश्विने
जगदंबिकाम् ॥ मार्ग शीर्षे हरिं चैव पौषे सर्वास्तु केचन ॥ २४ ॥ अथ प्रतिष्ठायां लग्नव-
लम् ॥ केन्द्र कोण हूला भस्थैः शुभैः पापैश्च सेन्दुभिः ॥ आयारिगैस्तु तैश्वर्य्य प्रदा
देवाः प्रतिष्ठिताः ॥ २५ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्ते
प्रतिष्ठा कथनं नाम घा प्रभेयं च द्विविंशतिः ॥ २६ ॥ इति श्री संग्रह शिरो मणौ प्रतिष्ठा कथनं नाम
द्वाविंशतिः प्रभा २२ ॥ अथ मिश्र प्रकरणम् ॥ तत्रादावंग स्फुरण फलम् ॥ अंग स्फुरित फ-
लं वक्ष्ये दक्षिणांग समुद्भवं ॥ पुरुषाणान्तु तज्ज्ञेयं वाम भागे मृगीदृशाम् ॥ १ ॥ पृथ्वी
लाभ शिरः स्थाने धन लाभो ललाटके ॥ प्रियाप्तिः स्याद्भुवोर्मध्ये भ्रुवोर्युग्मे सुखा
वहा ॥ २ ॥ शुभा वार्त्ता श्रुतौ कर्णे लोचने प्रिय दर्शनम् ॥ दृक्कोण भागयोर्लक्ष्मीर-

शि धः पक्ष्मणि सज्जयः ॥ ३ ॥ गण्डदेशे स्त्रिया सौख्यं नाशायां गंधजं सुखम् ॥ उष्ठरो-
३२५ ष्ठेतु वास्वाद श्चुंबनं चाधरे स्त्रियाः ॥ ४ ॥ हनुदेशे भय ञ्ज्ञेयं मुखे मधुर भोजनम् ॥ भू-
षाप्तिः कंठ देशे स्यात् ग्रीवायां रिपु जं भयम् ॥ ५ ॥ ज्ञेयः पराजयः पृष्ठे स्कन्धे मित्र-
समागमः ॥ प्रियाप्ति र्दोदु देशे स्यान्मध्ये वाहोर्धनागमः ॥ ६ ॥ द्रविणाप्तिः करे विद्याद्वि
जयं वक्ष सि ध्रुवम् ॥ प्रमोदं च वलं कल्याणं ग्वेप्रीति मनुत्तमम् ॥ ७ ॥ स्थानात्प्रचल-
नं नाभौ कोश वृद्धि स्यान्त्र के ॥ कोशाप्ति रुदरे नार्या जघने पति संगमः ॥ ८ ॥ स्फिगु
र्वाहु नाप्ति स्स्यात् लिंगे योषित्समागमः ॥ दृषणे पुत्र लाभ स्त्वा भ्युदयो वस्ति देश
के ॥ ९ ॥ ऊरौ सद्वा ससं प्राप्ति रिपु संधिस्तु जानुनि ॥ कचिद्धा निस्तु जंघायां स्यान्ना
प्ति श्चरणोपरि ॥ १० ॥ पादाधो लाभदं यानमङ्ग स्फूर्त्तिफलं त्विदम् ॥ वामभ्युं लां-
फलं चेतद्वधै ज्ञेयं विपर्य्ययात् ॥ ११ ॥ नारीणां दक्षिणांगे स्याद ङ्गस्य स्फुरणे तथा
॥ अंग स्फुर्तिः समा ज्ञेया लांछणे मशकास्तिलाः ॥ १२ ॥ कराङ्गुति दक्षिणे पाणी · ३२५

नृपस्य स्त्वशुभदा स्मृता ॥ अन्येषां लाभदाः पादतले गमनकारिणी ॥ २३ ॥ अथ पल्लीप-
तनफलम् ॥ तत्राशुभाशुभतिथिवारनक्षत्राणि ॥ भू १ नेत्रा २ ग्नि ३ शरा ५ गा ६ शा १० विश्वा
१३ दित्ये १२ द्वा ११ संमिताः ॥ तिथयश्चाशुभदा पल्लीपातेऽन्यास्त्व शुभा मताः ॥ २४
॥ सौम्या वारा श्शुभाः प्रोक्ताः पापाश्चाशुभफलप्रदाः ॥ पुष्याश्विरोहिणीद्वन्द्वं पुनर्भं फा-
ल्गुनस्यम् ॥ २५ ॥ धनिष्ठान्त्यानुराधा रव्यं शतभं च शुभप्रदम् ॥ वृत्तोऽन्यद्धं निखिलं स्या-
त्पल्ली पाते नृणां सदा ॥ २६ ॥ दक्षिणांगेऽखिले पुंसां वामांगे च स्त्रियां शुभम् ॥ वामोरु
घुदरे चैव मस्तके हनु वर्जिते ॥ २७ ॥ पल्लीपातश्शुभो ज्ञेयस्ततो न्यत्र न शोभनम् ॥
यत्फलं पतने पल्ल्याः शरटारोहणेऽपि तत् ॥ २८ ॥ शरटस्य प्रपाते च पल्ल्यारोहे तथा फ-
लम् ॥ स्नातव्यं स्पर्शने पल्ल्याः शरटस्य सवाससा ॥ २९ ॥ जन्मर्क्षे मृत्युयोगे च द-
ग्धे विष्ट्यादिदूषिते ॥ लग्ने पापयुते चन्द्रेऽष्टमे रिष्टं प्रजायते ॥ ३० ॥ तत्र शान्तिं ज-
पं होमं रुद्रं मृत्युञ्जयादिकम् ॥ पंचगव्ययुतं स्नानं कुर्यादाज्यावलोकनम् ॥ ३१ ॥

अथ खञ्जन दृष्टिफलम् ॥ वित्तं त्वग्नौ कार्य्यसिद्धिर्तुलाख्ये कृतान्तो भयं याम्ये रोगभ-
यं सुरारि कलहो वित्तं समुद्रालये ॥ वायव्ये वरवस्त्र यान शयनं दिव्यांगना चोत्तरे
ईशाने मरणं ध्रुवं निगदितन्दिग्लक्षणं खञ्जने ॥ २२ ॥ अपां समीपे गज मस्तके वा
सूर्य्यास्ये वारणा सन्निधौ वा ॥ आकाश मार्गे गहने वने वा धन्यो नरः पश्यति खञ्जरीट
म् ॥ २३ ॥ अथ खञ्जन शकुने वशंतराजः ॥ अश्वेषु गोषु गजवाजि महोरगेषु राज्य प्रदः
कुशलदः शुचि शाद्वलेषु ॥ भस्मास्थिकाष्ठ न विदग्नि उलूक केषु सद्यो ददाति-
मरणं खलु खंजरीटः ॥ २४ ॥ यः कंधरोरः शिरसा समंतात् विभर्त्ति कायश्च समंत
भद्रः ॥ आकाश वर्णो गल मात्र कृष्णः शितानना यः खलु कार्य्य नाशः ॥ २५ ॥ सा-
र्प्यो हरिद्रा रससन्निभो यो गोमूत्र भाभः खलु खंजनो धमः ॥ सर्वत्र कार्य्यं विपुलांच ल-
क्ष्मीं समंत भद्रः प्रददाति भद्रम् ॥ २६ ॥ स्वतोष्ठ के ष्वेव च एष यातः छिद्रं-
स्य पक्षौ विदधाति मृत्युं ॥ पक्षे विधुन्वन्दिवसस्य चान्ते दृष्टो मृतो वान शुभः कदा- २१९

चित् ॥ २७ ॥ यात्रस्य वस्था शाकुनेऽमुष्य शुभाशुभावा मप्यसैन्हि दृष्टा ॥ स्वस्था
३२५ पिता दुष्युप लक्षणी यात द्विस्वरेणाऽलमिहा परेण ॥ २८ ॥ अथ क्षुतम् ॥ औषध्यभ्य-
यने वा देवा ह्ने शयने ऽशने ॥ बीज वापे बुधैः प्रोक्तं शोभनं सप्त सु क्षुतम् ॥ २९ ॥
मृत्युर्वह्नि भयं हानि स्तुष्टि र्द्रव्या गम स्सुखम् ॥ क्लेशो ऽर्था गमनं प्रोक्तो दिक्षु क्षि-
धा फलं क्रमात् ॥ ३० ॥ अत्रोदाहरणम् ॥ यामार्द्ध संज्ञका स्तत्तो विज्ञेयंच पृथक्पृथ-
क् ॥ आद्ये ऽर्द्ध प्रहरे प्राच्यां द्वितीये ऽग्निदिशि क्रमात् ॥ ३१ ॥ तृतीये याम्यत श्चैव
फल मुक्तं विचक्षणैः ॥ वामे च पृष्ठे शुभदं फलं च स्या द्दक्षिणे ऽग्रे फल मत्र चिंत्यम् ॥
३२ ॥ स्थानोप विष्टस्य वृथा क्षुतं स्यादुठात्कृतं प्लेष्म भवंच्च वृद्धात् ॥ स्याद्भोजने
वा शयने तथा दौ स्थानांतरे शोभन मत्र नान्यत् ॥ ३३ ॥ अत्यर्थ निघ्नं क्षुत मत्र वाच्यं-
नहर्ष वृत्या श्व कुमारि कायाः ॥ मद्यस्य कर्त्तुः श्रमदाजनानां स्याच्चर्म्मिकायाश्च धवं-
श कन्याः ॥ ३४ ॥ प्रयोजने यत्न कृते ऽपिजातं क्षुतं क्षणात्तद्धि निहन्त्य वश्यम् ॥ ३२८

कार्य्योत्सुकेनापि मनागपीत्थं तस्मादुपेक्ष्यं न विचक्षणेन ॥ ३५ ॥ होमपूजाश्नान-
स्तोमधर्म्मान्नेच भवेत्सुतम् ॥ सविशेषं तदा कार्य्यं पुनर्व्याहृत्य जायते ॥ ३६ ॥ अथ
स्नानफलम् ॥ वामान्दिशं दक्षिणभूमिभागाद्गच्छन्प्रयाणे भुनकः प्रशस्तः ॥ वाम
प्रदेशात्स पुनः प्रवेशे प्रशस्यते दक्षिणभागगामी ॥ ३७ ॥ मूत्रं च कृत्वाभिमुखं प्र-
याति यो जागरूकः शुभदस्स पुंसाम् ॥ कार्य्येषु सर्वेष्वपि सर्वकालं न मूत्रयन्नो शु-
नकी प्रशस्ता ॥ ३८ ॥ व्रजेत्पुरस्ताद्यदि मूत्रयित्वा सदैव तत्सिध्यति कार्य्यमिष्टम् ॥
मिष्टान्नभोज्यं यदि गोमयेतु शुष्केन शास्तं सजले प्रशस्तम् ॥ ३९ ॥ आयाति रुथ्यो
ऽभिमुखो यदि श्वा क्रीडां प्रकुर्वन्विलुठन्धरित्र्याम् ॥ शीघ्रं नराणां भुवमध्वगानां-
भुवं प्रभूतो धनधान्यलाभः ॥ ४० ॥ नृणां प्रयाणे भवनागमे वा श्वानो रमन्ते यदि स
प्रमोदाः ॥ तदेष्टकार्य्येऽपि भवेत्प्रमोदः समागमश्च स्वजनैः समं स्यात् ॥ ४१ ॥
श्वा वेपुरस्तादवनीं विलिख्य यातुर्मुखं पश्यति चेत्तदानीम् ॥ तत्रैव देशेऽद्रविण ३८

स्य लाभं व्रजन्ति कार्य्येन हि संशयो ऽत्र ॥ ४२ ॥ फलं गृहीत्वा सहसा निवासं-
भ्रुवा वै विप्रोज्जत्यति पुत्रलाभम् ॥ यो ऽभ्येति दृष्ट्वाभि सुखं प्रयातुः शीघ्रं प्रकु-
र्य्याद्धन धान्य लाभम् ॥ ४३ ॥ अथ काकशकुनानि ॥ वामेन गत्वा विनिवृत्य मार्गे
काको यदा दक्षिण भागगः स्यात् ॥ यातुः प्रकुर्य्याद्धित कार्य्य सिद्धिं क्षेमंच सि-
द्धिं पुनरागमंच ॥ ४४ ॥ कृत्वा रवं यः पुरतः प्रयाति पुरःस्थितो ऽधो मृदमाद्धाति
॥ कण्डूयते यश्च शिरोऽङ्घ्रिणा शः पुंसां तदाभीष्ट फलन्ददाति ॥ ४५ ॥ केंकेंति
हल्लीयति वोषिदास्ये यो गायं कों को मिति शब्दितं स्यात् ॥ अपत्य लाभः कुकु
हे त्यनेन गन्तं फलं कंक कद्रूत्यनेन ॥ ४६ ॥ कोंको मिती दं सुख लाभ कारि क्रुंक्रुं
निनादः प्रिय संगमाय ॥ मैत्र्याप्तये स्यात्कलीव शब्दं कनेव वाणी धन हानि
कर्त्री ॥ ४७ ॥ अथ काक स्पर्श फलम् ॥ मस्तके वायसस्पर्शे दारिद्र्यं मरणं कलिः ॥ क
र्णो स्कन्धे महा भीतिरिष्टप्रोयांग केष्वपि ॥ ४८ ॥ योषितां मस्तके भर्त्तुर्

स्व सुतस्य च ॥ अथकाकस्पर्शदोषाभावः ॥ दृष्टा धो वाप्य सिद्धान्न भक्ष्य दध्या दियो गतः
३३१ ॥ ४९ ॥ काकस्पर्शो न दोषाय ह्य कस्मादूषणान्नदा ॥ षण्मासाभ्यन्तरे मृत्युः काक
मैथुन दर्शने ॥ ५० ॥ दिवा वाय दि वा रात्रौ यः पश्येत्काक मैथुनम् ॥ स नरो मृत्यु
माप्नोति ह्यथवा स्थान नाशनम् ॥ ५१ ॥ काक घात व्रतं यद्वा विदधीताथवत्स
रम् ॥ पितृन्देवान्द्विजान्भक्त्या भत्यहं वा भिवादयेत् ॥ ५२ ॥ जितेन्द्रियो जितक्रो
ध स्तन्य धर्म परायणः ॥ तद्दोष शमनार्थाय शान्ति कर्म्म समारभेत् ॥ ५३ ॥
कपोतो वायसः पक्षी शरदो मूर्द्धि चेत्यतेत् ॥ षण्मासाभ्यन्तरे तस्य स्वामिनो वा
मृतिस्तदा ॥ ५४ ॥ अथपिंगला ॥ गृहोपरि गृह द्वारि पिंगला यस्य रोदिति ॥ हानि
स्तस्य गृहस्यैव न शुभा तस्य सा स्मृता ॥ ५५ ॥ शान्तायां दिशि दृक्षेषु शुभे
षु यदि पिंगला ॥ रौति भव्यं तु तत्रेति नाशुभं तत्र भाषितम् ॥ ५६ ॥ पृथिव्यां
कीचि कीचीति चिलि चीति जलोद्भवम् ॥ शब्दितं शुभ दं ज्ञेयं पिंगलाया बुधाः ३३१

गृहस्थोपरि भाषमाणो दुःखाय स स्यात्खलु विदुः ॥ ५७ ॥ अथोलूकः ॥ गृहस्य नाशाय च सप्तरात्रात्सायं च राज्ञो द्विगुणानुबंधी ॥ ५८ ॥ न्यमृत्युवेच ॥ गृहस्य नाशाय च सप्तरात्रात्सायंच राज्ञो द्विगुणानुबंधी ॥ ५८ ॥ न्य

मृत्युवेच ॥ गृहस्य नाशाय च सप्तरात्रात्सायंच राज्ञो द्विगुणानुबंधी

हं गृहद्वारि चरत्युलूको हरन्ति चौराः द्रविणं प्रसह्य ॥ तस्मिन्प्रदेशे निशि मो-

संयुक्त स्तद्दोष नाशाय बलिः प्रदेयः ॥ ५९ ॥ घूघू शब्दः स्यात्सदा शान्तरूपः

गलूगलू शब्दस्तादृशश्चैव वेद्यः ॥ अन्ये शब्दा निंदिता एव वेद्याः पूर्वाचार्यैः सू-

र्य्यभीतस्य चोक्ताः ॥ ६० ॥ शान्ता यान्दिशि वृक्षेषु ग्रामाद्दूरे च शब्दितः ॥ घूका

स्यात्सर्वलोकानां वृद्धि वृद्धि सुखार्थकृत् ॥ ६१ ॥ अथ स्वस्यारिष्टज्ञानम् ॥ यस्य स्व-

र्य्य स्वरोऽजस्रं षोडशाहं वहेत्तदा ॥ सद्यो मृत्युस्ततो न्यूने न्यूनाहमिति मासकैः ॥

६२ ॥ एवं वाम स्वरे सौख्यं तयोर्न्नाशे मृतिः क्षणात् ॥ यस्य चन्द्रायते सूर्य्यश्च-

न्द्रस्सूर्य्यायते नरः ॥ ६३ ॥ अहोद्वयं त्रयं तस्य षण्मासाभ्यन्तरे मृतिः ॥ निष्प्रभं

भास्करं पश्येन्न्यायते दशभिर्द्दिनैः ॥ ६४ ॥ जाग्रत्पश्यति यः स्वप्नं सोऽपि वर्षं न 

जीवति ॥ न विन्दे न्कर्णघोषं यो नाशाग्रं रसनां भ्रुवम् ॥ ६५ ॥ मेढ्रं वाम न पश्येद्य स्तस्मा साल्प न जीवति ॥ मणि बंधं ललाटस्थं यदि सूक्ष्मं न पश्यति ॥ ६६ ॥ यो दुर्गंधि र्विना हेतुः श्रीको वा हृति दीप्तिमान् ॥ कृशांगस्स्थूल देहः स्यात् सरक्तस्सन खो ऽपि वा ६७ ॥ सतद्वा से क्षरणो वापि मास षट्कं न जीवति ॥ ध्रुवं विष्णोः पदं चैवा रुन्धती मातृ मंडलम् ॥ ६८ ॥ अमालां चंद्रगं चिन्ह मपश्यन्नैव जीवति ॥ कफो मज्जन्ति यस्या शुपं कांदो खंडितं पदं ॥ ६९ ॥ स्नातस्य प्राग् उरः शुष्येत्तु नालि स्स्याच्च मूर्द्धनि ॥ नो सुभुक्त्वा ध्वनिं धत्ते स्थूल देह कृशस्तथा ॥ ७० ॥ अथ संग्राम शुभ चिन्हं ॥ जिव्हा शोफः मुखं पश्च तांबूले राग हीनता ॥ वाणी सगद्गदा यस्य तस्य मृत्यू रणे भवेत् ॥ ७१ ॥ अथ युद्ध जय लक्षणम् ॥ प्रफुल्लित वपुः कायो रोमांची स्थिर हृग्भट ः ॥ धैर्योपेतस्य मुत्साही विजयी स रणे भवेत् ॥ ७२ ॥ अथ छाया पुरुष दर्शन प्रकारं तत्फलं च ॥ प्रातः पृष्ठ गते सूर्ये स्नात्वा मन्यु ह्यनुदो नरः ॥ तिष्ठन्नानाविधे देशे पश्येच्छायां निजां ततः ॥ ७३ ॥ हृत्कंठ

विदुः ॥ ५७ ॥ [illegible] मपतयान्विरम् ॥ ततो द्वागम्बरे पश्ये च्छाया पुरुष मात्मनः ॥७४
मृत्युके [illegible] वर्ते चेत्सं मुखे श्वेत मीक्षते ॥ यावदब्दं सुखं क्षेमं विजयं प्राप्नुया त्तदा ॥
[illegible] ॥ दृष्टे तस्मिन्निःशिरो हीने मास षट्कं न जीवति ॥ द्विकोणे हायनं चैकं व्यंसे वै सप्त मा-
[illegible] ॥ ७६ ॥ सरंध्र हृदये सप्त दश मासान्वि हस्तके ॥ विपार्श्वे त्रीनृत्युरस्के द्वौ व्यास्ये
मासं हि जीवति ॥ ७७ ॥ द्विदेह दर्शने मृत्युः सद्य एव न संशयः ॥ मित्र नाशो विपादेच्च
वंधुनाशो विहस्तके ॥ ७८ ॥ आत्मनाशो विशीर्षे स्यात्सर्वाभावे कुल क्षयः ॥ दुर्भि
क्षं दारुणं देशे कबुरेच पराङ्मुखे ॥ ७९ ॥ विवरे भूम्रके रूक्षे भिन्ने छिन्ने विघातनम् ॥
पीते रुजोऽरुणे हानिः कृष्णे मृत्युः प्रजायते ॥ ८० ॥ अथ स्वप्न दर्शन फलम् ॥ आद्ये यामे नि-
शि स्वप्नो वर्षेण फल दो भवेत् ॥ द्वितीये मास षट्केन त्रिभिर्मासैस्तृतीयके ॥ ८१ ॥ प्रा-
त स्सद्य फलः स्वप्नः स्नात्वा सुप्यान्नचेन्नरः ॥ रोग चिंतोद्भवा व्यथा या चैव दिवे स्थि-
ता ॥ ८२ ॥ अथ शुभ फल दास्स्वप्नाः ॥ सद्राजा ब्राह्मणा देवाः सिद्ध गंधर्व किंन्नराः ॥ गुरुः श्वेतां

स्वरानारी तेषांचेद्दर्शनंशुभम्॥ ८३॥प्रासादगुरुशैलानांश्वेतोक्षगजवाजिनाम्॥ दर्शनं रोहणां लाभःसिंहस्यारोहणं तथा॥ ८४॥ध्वजंछत्रंसुवर्णाब्जरत्नरौप्यदधीनिच॥ यवगोधूमसिद्धार्थाफलंदीपश्च कन्यका॥ ८५॥ स्त्रीघंटाक्षतदूर्वाश्च दर्पणः पुष्पितोद्रुमः॥ लाभेदा दर्शने चैषां लाभसौख्यं भवेद्ध्रुवः॥ ८६॥ भोजनं रोदनं वीणावादनं नौभिरोहणम्॥ अगम्यागमनंविष्टालेपनं छत्रमीरितम्॥ ८७॥ आरूढो यो हि जागर्त्ति सपुष्पं फलितं द्रुमम्॥ दंष्ट्रः श्वेताहिनादंष्टो करेस्यात्स महाधनः॥ ८८॥ रुधिरस्नान पानेच सर्प्पदंष्टो मृतिर्निजः॥ शय्याहर्म्याशनं गानं ज्वलनं स्वशिरश्छिदा॥ ८९॥ रक्तश्रावो जलैःस्नानं मरणं मांसभक्षणम्॥ सुरायाःपयसःपानं प्रशस्तं पायसाशनम्॥ ९०॥ कदलीकल्पवृक्षाश्च तीर्थं गंगादिकं सरित्॥ तोरणं भूषणं राज्यं स्वांगे श्च ग्रामवेष्टनम्॥ ९१॥वेदवाद्यादिनिर्घोषंगणोन्निस्मरणं तथा॥दंशेवृश्चिककीटानांतडागोद्यानदर्शनम्॥९२॥पीतंरक्तंफलंपुष्पं स्वप्ने प्राप्नोतियो नरः॥लभतेसोऽचिरात्स्वर्णं पद्मरागमणिंतथा॥९३॥जयोद्यूतेरणेवादेपुरुहूतध्वजेसुरांगणास्॥आत्मनोवंध

नं भ्रीर्य वन्दं राव मनुत्तमम् ॥ ९४ ॥ अभिषिंच करो विप्रो देवो वास्तत्र धारणात् ॥ कुरुते म-
हिषी व्याघ्री गो सिंही स्तन्य पानकम् ॥ ९५ ॥ स्वनाभौ तृण वृक्षांश्च पुष्पाणा मुद्भव स्ता-
था ॥ भुवो भूमि धरस्यापि क्रमेलो क्षेपणो भुगः ॥ ९६ ॥ मणिसौवर्ण रौप्याणां पात्रे वा
भोजिनी दले ॥ योऽश्नाति पाय संस्वप्ने स राज्य मधि गच्छति ॥ ९७ ॥ गो लिङ्गी ब्राह्म-
णो राजा पिता मित्रं च देवता ॥ यद्ब्रूते तद सत्स्वप्ने तत्तथैव प्रजायते ॥ ९८ ॥ पूजितं श्रिव
लिंगं च देवता वा तथा विधा ॥ स्वप्ने दृष्टा भयं च्छंति नराणां विपुलं धनम् ॥ ९९ ॥ त्य-
क्ता नक्रास्थि कर्पासं श्वेतं सर्वं शुभं मतम् ॥ सर्वं कृष्ण मस द्वित्वा गो देवाश्व गज द्विजान् ॥
॥ १०० ॥ अथाशुभस्वप्नाः ॥ तैलाभ्यक्तोऽथ दिग्वासा आरूढं महिषं खरम् ॥ उष्ट्रं कृष्णं वृ-
षं चास्य याम्यां गच्छन्न जीवति ॥ १०१ ॥ पाकस्थाने वने उक्त पुष्पो च्छू सूतिका गृहे ॥
विकलां गो विप्रो त्स्वप्ने सोऽसुभि र्विप्रयुज्यते ॥ १०२ ॥ उपद्रवं तियं स्वप्ने श्रृंगिणो दंष्ट्रि-
णोऽपि वा ॥ वानरो वा वराहो वा भवेद्राज्य कुलांतकः ॥ १०३ ॥ जतु कौंकुम सिंदूर ध-

त वो यस्य मन्दिरे ॥ पतान्त न० त त्तस्यै ग०
गात्रेषु त्वरा पुष्प दु मो द्रुमः ॥ स्वरोष्ट्र कपि सर्प्याये ध्यानं स्नेहस्य भक्षणम् ॥ २०५
॥ कालु थेगाम्बु ना मध्या कर्द मे गो मयेन च ॥ स्नेहेन व पुषो लेपः कर्द मेवि निमज्जन
म् ॥ २०६ ॥ पातो दन्त हस्ता नां जिह्वा या श्वांत्र यो स्तथा ॥ एते शो क प्रदाःस्वप्ना
दृष्टा हा नि करा अपि ॥ २०७ ॥ स्वप्ने सान्दोलनं गीतं क्रीडितं स्फोटितं तथा ॥ हसितं
भूषितं लोतो वहन्तोरे रथो गतम् ॥ २०८ ॥ सूर्येन्दुध्वज ताराणां पात स्त्व स्य चिता
पिवा ॥ रज्वा छेदः शिरो भागे कां स्य चूर्णस्य धारणं ॥ २०९ ॥ प्रवेशो जननी गर्भे हृ
ष्ममेत दरिष्ट स्म् ॥ कार वीर मयो कंच लता पाशेन वंधनम् ॥ ११० ॥ कृष्णां वर धरा
योषा लिंगनं मृत्यु कारणम् ॥ आरुह्य पुष्पिता न्वृक्षा न्यो विचिंत्य निजं वपुः ॥ १११ ॥
भूष यत्य रुणेः पुष्पै स्सोऽपि प्राणे र्वि युज्यते ॥ धृत रक्तां बरा श्लिष्टो हत्या माप्नोति मान
वः ॥ ११२ ॥ यस्तु धूमित मात्मानं व्याप्तं धूमेन वे क्षते ॥ भस्माज्य लोह लाभं च स्व ल-

सं.शि स्त्या विमुच्यते ॥ २१३ ॥ क्रोष्टु कुक्कुट मार्ज्जार गोधा वभ्रु भुजंगमाः ॥ जम्बुका वृश्चि-
३६० दंशाश्च दृष्टास्स्वप्नेन शोभनाः ॥ २१४ ॥ रत्न द्रव्यायुधोपानत् शय्या भूषाश्च योषि-
ताम् ॥ सवस्त्रादि प्रिय वस्तूनां महारोऽर्थनाशकः ॥ २१५ ॥ विवाहोत्सवयो श्लो-
के भ्रंशे वा न स्वके च्यायोः ॥ कशाघवय वानां तुच्छेदने स्वप्न नाशकः ॥ २१६ ॥ वपनं
श्म श्रुकेशानां नेत्र रुक् खंजनं तथा ॥ कूप गर्त दरि ध्वांत विवरेषु न शोभनम् ॥
२१७ ॥ कपोतश्येन गृध्राद्या ऋक्ष कौशिक वायसाः ॥ शृगाल शशक श्वानो दृष्टाः
स्वप्नेन शोभनाः ॥ २१८ ॥ शष्कुली कृशरान्नानां गुड पूपादि भक्षणम् ॥ गोमयं
चोष्ण पानीयं स्वप्ने पीतं न शोभनम् ॥ २१९ ॥ रक्ते पुरुष सूत्रे वा श्रवन्मृत्यु मवाप्नुयात्
रक्त कृष्णानि वासांसि पुष्पाणि च विभर्त्तियः ॥ २२० ॥ पितृकार्य्यं प्रकुर्वाणो मृच्यते स
न संशयः ॥ भूत प्रेत पिशाचाद्यैः श्वपचैस्सह संगतः ॥ २२१ ॥ आहूतो वाधते-
दीर्घ्यो स्वल्पाहे म्रियते नरः ॥ असूर्य्यं दिवसं रात्रिं विचंद्रां गत तारकाम् ॥ २२२ ॥ कृपं रु

योकोलजां पश्येत्स्वप्नेसोऽपिविनश्यति ॥ सीसपित्तलकस्तीरंकांसताम्रायसंवपुः ॥
१२३ ॥ प्रुष्क वृक्षौषधं शिल्पी दृष्टाप्स्वेतेन शोभनाः ॥ मासादस्तत्रभूमींद्रच्छिरद
स्याणां ध्वजस्यच ॥ १२४ ॥ पतनं शक्रचापस्य नराङ्गस्य विनाशकृत् ॥ तारकोला
हलाङ्गानिंदाक्रोशादि संभवः ॥ १२५॥ विद्याज्ञाज्यभयं दृष्टि श्टंगी केशादि वि-
द्रवात् ॥ अथ स्वप्न फलदव्यवस्था ॥ येदृष्टा स्वप्नति स्वप्नाः स्वस्यैव फलदास्मृते ॥ १२६ ॥
परंप्रति चते तस्य फलदाः किंचिदात्मनि ॥ अथदुष्ट स्वप्नदर्शन दोष शान्तिः ॥ दुष्टेत्वा लौकि-
ते स्वप्ने निवेद्यो ब्राह्मणाय तत् ॥ आशीर्भिस्तोषितो विप्रैः पुनःस्सुप्यान्नरेश्वरः ॥ १२८॥
नब्रूयाच्च पुनस्स्वप्नं संस्नायात्पुण्यवारिभिः ॥ मृत्युञ्जय जपो होमः शांतिस्स्वस्त्ययना-
दिकम् ॥ १२९ ॥ सेवास्वत्थ गवां प्रातर्दानं स्वर्णादि शक्तिच ॥ श्रवणम्भारतादीनां स्व
प्नदोषप्रशान्तये ॥१३०॥ अथोत्पाताः ॥ उत्पातास्त्रिविधाज्ञेयादिविभौमांतरिक्षजाः ॥ भेषु
दिव्यास्तथा वृक्षध्वजादावन्तरिक्षजाः ॥ १३१॥ भूमौ भौमाः क्रमादुग्र मध्यमाल्पफ-

लप्रदाः ॥ अथोत्पातानां संग्रहः ॥ भूमिकंपो दिशां दाहो निर्घातो धूलिवर्षणं ॥ उल्कापा-
तस्तरुच्छेदो नभसो वृष्टि रक्तनाम् ॥ १३२ ॥ अंधकारो दिवा विद्युत्पातो ऽप्यर्तुविपर्य्य-
यः ॥ प्रकृतिप्रसवो जन्तोरवीन्द्वोश्च विपर्य्ययः ॥ १३३ ॥ ग्रहाणां वायुतिर्य्युद्धं स्वका-
ले यत्र जायते ॥ वर्षाकालं विना बिंबो रवीन्द्वोः परिमंडलम् ॥ १३४ ॥ शाकस्यासु स्य
लाभ्र्वं च यासं ग्रहणं द्वयम् ॥ बालस्त्री द्विजवर्य्याणां वधः पीडा जनस्य च ॥ १३५ ॥ प्रा-
सादस्य च देवस्य ध्वंसः पातो ध्वजस्य च ॥ ग्रहाः वक्रातिचारस्थाः सर्वे वास्त्वर्कगाः खगाः
१३६॥ सर्वेऽप्येकर्क्षगाः खेटाः एकर्क्षेऽर्कि बृहस्पती ॥ शुक्ले पक्षे भृगो रक्तो दर्शो वा
केतुदर्शने ॥ १३७॥ शुष्कलं खग पङ्क्तिस्थ श्वादि चंद्रार्कि दर्शनम् ॥ चुल्हा मन्यु-
द्भवोऽकस्मात् जले धूमादिकं भवेत् ॥ १३८॥ उलूखलघरट्यादि चलनं स्फोटनं तथा
॥ प्रतिमायाः प्रकंपो वा हसनं रोदनं तथा ॥ १३९ ॥ भुवो विवर दृत्याद्या उत्पातास्त्वप-
रेऽपि च ॥ एषां नराश्च ते ज्ञेयाः फलमेषां ब्रवीम्यथ ॥ १४० ॥ अथोत्पातज्ञानाय चतुर्विध- ३५

संग्रि मण्डलानि ॥ कृत्तिका भरणी पुष्यं मघा पूर्वा विशाखिका ॥ पूर्वा फाल्गुणिके तानि भानि
२४१ सप्ताग्नि मंडलम् ॥ मूलाश्लेषा शताद्रा न्युत्तरा भाद्रपदस्तथा ॥ पूर्वाषाढाश्वि धैतानि
सप्त वारुण मंडलम् ॥ २४१ ॥ पुनर्भो फाल्गुनी हस्तं त्रितयं मृगशीर्षकं ॥ वायु मंडल
सञ्ज्ञानि भानि सप्त स्मृतानि च ॥ २४२ ॥ अभिजिच्चोत्तरा स्वाढा नुराधा श्रवण द्व-
यम् ॥ ज्येष्ठा च रोहिणी भानि सप्त चैन्द्रस्य मंडलम् ॥ २४३ ॥ भूकंपादि महोत्पाता जा-
यंते यत्र मंडले ॥ तत्तत्स्वभावजं द्रव्यं जंतु देशं च पीडयेत् ॥ २४४ ॥ त्रि मण्डलके नक्ष-
त्र तत्स्थाननिवासि नाम् ॥ छिन्ने खंड फलं ज्ञाति दूरे नास्ति फलं त्विद तु ॥ २४५ ॥ श्वे-
ते भयं च पीते तु वृष्टि नील गुणे रुजः ॥ कृष्णे भूप क्षयो धूम्रे नीहारः परिधे भवेत् ॥ २४६
प्रावृट् कालं विना न्यत्र परिधिर्श्च तदा त्विदम् ॥ तस्मिन्काले तु वृष्टिः स्यात् परिधो-
ऽस्तं तादिते ॥ २४७ ॥ अकाले फल पुष्याणां मुदये धान्यनाशनम् ॥ जलार्द्रत्वे स्थले च
छिन्ने हती परिकीर्तिता ॥ २४८ ॥ स्त्रीवधे चाति दुर्भिक्षं विप्र वाल वधेऽपि तत् ॥ देवध्वं- २४२

संग्री सेच्च देशस्य राजध्वंसः प्रजायते ॥ १४९ ॥ सर्वग्रासे ग्रहे सर्व वस्तूनां च महर्घता ॥ दु-
३४२ र्भिक्षं कुरुते खेटा सौमाद्या वक्रगामिनः ॥ १५० ॥ अतीचारगतास्सर्वे स्वर्क्षस्वोच्चग-
ताश्च ते ॥ ज्ञेया भव्य फलास्त्वेकराशिस्था देशनाशकाः ॥ १५१ ॥ स्यातामस्तोदयौ
शुक्ले पक्षे चेद्भार्गवस्य च ॥ राजयुद्धं तथा घोरं वृष्टिः स्यात्तु निरंतरा ॥ १५२ ॥ जीवार्क
पुत्रयोर्योगे दुर्भिक्षं विग्रहस्तथा ॥ संग्रामश्चापि दुर्भिक्षं जायते भुशालोदये ॥ १५३
॥ अथकेतवः ॥ मुशाला इति धूम्राभा दीर्घपुच्छनिभाश्च ये ॥ तथा श्वेतशिखाकारा
विद्युल्लोतो निभाश्च ये ॥ १५४ ॥ इत्याद्याः केतवस्सर्वे राष्ट्रभंगकरा मताः ॥ धू-
म के तूदये मृत्युर्जायते पृथिवीपतेः ॥ १५५ ॥ शिखाः श्वेतोनिभाः केचिच्छोभ-
नाः परिकीर्तिताः ॥ शितः स्निग्धोऽल्पको दीर्घः शीघ्रोऽतीव शुभप्रदः ॥ १५६
॥ वह्निभीरग्निरक्ताभो कृष्णवर्णो मृतिप्रदः ॥ शक्रध्वजसमो नेष्टः धूम्रवर्णोऽपि ३४२
तद्विधः ॥ १५७ ॥ नेष्टो द्वित्रिचतुः शूला द्युत्यन्तिः कथिता बुधैः ॥ रक्तपंक्तिनिभे स्व-

र्तावर्णे भागपरोदये ॥ १५८ ॥ नृपनाशस्तथै शान्त्यां तैलालाभोमहर्घता ॥ नाशाद्रुत्कथि-
तस्यग्रंथस्तोऽधोतारकाप्रभः ॥ १५९ ॥ वावंधसदृशो याम्यांदुःखदो भूमिचारिणाम् ॥
यावद्दिवससुत्पातःससुदेतिनभःस्थले ॥ १६० ॥ तावन्मासं फलन्धत्ते मासे र्वर्षाणि संव-
देत् ॥ अथान्योत्पात फलानि ॥ आरण्य पशवो ग्रामे चेद्दिशंतेनिजेच्छया ॥ कुर्वंति चय-
हं भूस्य मुलूकी च गृहं विशन् ॥ १६१ ॥ वल्मीकं क्षौद्रजालं वा यस्य सद्म नि जायते
॥ तदा गेहपतेर्न्नाशः कपोते वागृहंगते ॥ १६२ ॥ ह्यादिचंद्रार्कविंवे स्याद्रोग भी-
तीरणे मृतिः ॥ गृहाभावे फलं नेष्टं ह्यादिजीवे तु शोभनम् ॥ १६३ ॥ धरणी विवरोद्दे-
शे नृप नाशो रिपो र्भयम् ॥ त्रयो दश दिनः पक्षो यस्मिन्नब्दे भवेत्तदा ॥ १६४ ॥ प्रजाना-
शोऽथ दुर्भिक्षं तथा भूमिभुजां क्षयः ॥ अथ निर्घातस्वरूप तत्फलं च ॥ प्रचण्डवात सञ्जात निर्घा-
त पतनं भुवि ॥ पश्चिदीप्तेऽरुणे नेष्टं नृपहा भास्करोदये ॥ १६५ ॥ निर्घातश्चंड शब्दोः
थगाच्छन्तो नाशयेद्दिशम् ॥ घोर चौरद्विजान्वैश्यान्न्यायामेःक्रमाद्दिवा ॥ १६८ ॥

ग्रस्ते वान्त्यजानर्थान्हरेच्चयथा क्रमात् ॥ याम्यां धान्य पैशाच स्तम्बे रमतु
रंगमान् ॥ १६९ ॥ अथोल्कालक्षणं तत्फलंच ॥ धरणीं भाग संचार घोरराबास निर्म्मला ॥
तटत्तट द्दवा विद्यु क्वलंती दीर्घवक्रगा ॥ १७० ॥ अल्पपुच्छाग्निभा तद्दूहि हस्ताय
सपत्रगा ॥ तिर्य्यगूर्द्धगता श्वेता रक्तलम्बी तु तारका ॥ १७१ ॥ उल्कानु विविधाका
राकुल पुच्छाति दारुणा ॥ अथदिग्दाह फलम् ॥ दिग्दाहः पीत वर्णश्चेद्भूमि पालं निहं-
तिसः ॥ अग्निवर्णो निजं देशं वर्णानुत्तरतः क्रमात् ॥ १७२ ॥ धूम्रोऽल्प श्यामतां कुर्या
द्रक्तो देशं तु निर्द्धनम् ॥ प्राच्यां भूमि भुजान्हन्या दैशान्यां विदिशाः क्रमात् ॥
१७३ ॥ वैश्यान् शिल्पविदश्चोरान् तुरगान् क्रमतस्त्वथ ॥ निशि स्वर्सनिभःसव्य-
वायो रवे विमले शुभः ॥ १७४ ॥ अथभूकंपफलम् ॥ भूकंपो यामतो वर्णान् क्रमाद्धन्याद्दि-
वानिशि ॥ वायु मंडलजो भूप मास्यां तुम यथं तया ॥ १७५ ॥ यामान्त मुदके वन्हि मंडल
स्थो निहंतिच ॥ चन्द्रमण्डलयो भूपांस्त्वथा गुर्ज्जरदेशकान् ॥ १७६ ॥ भूपालांश्चीन-

देशी यान्त्र चेतो मण्डलाद्भवः ॥१७७॥ अथ रजोदयः ॥ रजोऽथ धूम्रवर्णं तु ध्वजकुंभ प्रभुश्च

न्नृपभीस्तथा ॥ भयंतद्दिशि धूम्राभेतस्मिन्काले रुजां भयम् ॥१७८॥ रजः सूर्योद-
ये व्योम छादयेद्दिव्य हं यदा ॥ तदा रोगाः प्रभूतास्स्युर्निशायामे तु भूपहृत् ॥१७९॥
॥ नित्यं रात्रि द्वयं नेष्टं क्षुद्भयं त्रिचतुर्दिनम् ॥ पञ्चाहं चेद्भयं घोरं मृते कालं च पीडितम्
म्॥१८०॥ अथ गंधर्वनगरं तत्फलं च ॥ गंधर्व नगरं हंति वर्णान्श्वेतादि वर्णकम् ॥ क्र-
मात्पूर्वादिक्स्थो भूपामात्य सैन्य पुरोहितान् ॥१८१॥ सध्वजं निर्द्धनं कुर्यात्तापु धानि-
निभं भयम् ॥ अथैषामुत्पातानां फलपाक समयः ॥ षड्भिर्मासैर्भुवः कंपो जायते फ-
लमुकवत् ॥१८२॥ दिग्दाहे विकृतौ सूतौ केतु निर्घातयोस्त्रिभिः ॥ रजोऽभिवर्षेभि
सद्यउत्पातेऽन्यत्र हायनात् ॥१८३॥ अथ वृष्टिविकृति तत्फलम् ॥ अकाले रुक्नृपा-
र्तिश्च सप्ताहं व्यभ्रकेऽपि च ॥ वर्षणे वारजो वृष्टौ नेष्टं मासादिभिर्मृतिः ॥ १८४॥
अथ मंगारकेद्धान्यैः फलाधेस्स्यान्नसंशयः ॥ देशनाशः शुको स्वांवुस्ल वृष्टौ-

प्रजायते॥१८५॥ दीप्ते सूर्य्ये प्रतीपं स्यात् छादिते भीतिरीतितः ॥ दंड्र चापेऽतिवृष्टिस्स्या
द्वो भिन्न चण्डां शुदीप्तिते॥१८६॥ अथ पक्षिमृगादि विकृति स्तत्फलमपि ॥ ग्रामारण्या स्तथा नी-
रस्थलजाश्चु निशाचराः ॥ शशिनो व्यत्ययं जातो स्व चक्रं पीडयंत्यमी॥१८७॥ संध्या
कालेऽथ दीप्ता या दिशो मार्गे पतत्रिणः ॥ क्रोशंति जंबुकादीनां संघा द्वारे चतद्दिशि
॥ १८८॥ विहंगा वियति व्यस्ता चक्राया नद्रतस्ततः ॥ कुक्कुटोऽस्तेच गोर्न्दतं हंसन्ते
रौति कोकिलः॥१८९॥ स्वरा भ्रष्टानोऽथवा स्वैरं प्रक्रीडंति परस्परम् ॥ इत्यादि विकृतौ
धृते पीडा भवति भूयसी ॥१९०॥ माघे बुधे तु महिषी श्रावणे वडवा दिवा ॥ सिंहे गावः
प्रसूयंते स्वामिनो मृत्यु दायिकाः॥१९१॥ अथान्येऽप्यशुभोत्पाताः ॥ अस्थि क्षिपति गेहेश्वा
सन्मुखोऽस्ते चरोदिति ॥ यस्य तद्गेह नाशः स्यात् परमासाभ्यन्तरे तदा ॥ १९२॥ रौति-
सूर्यो स्थे श्वा चेद्भ्रामंते सूर्य्य दिङ्मुखः ॥ भूप नाशस्तदा चास्ते रुपी शांनाश माप्नुयुः
॥१९३॥ स्तंभ द्वार निपातश्चेद्धूमो त्पति विनाग्निना ॥ युद्धान्ते वालका स्स्वैरं काष्ठलो-

ष्ः परस्परम् ॥ १९४ ॥ तदाभूप भयङ्घोरं विज्ञेयं दीर्घदर्शिभिः ॥ अंगनाबालका मन्त्रा-
भूयंते यत्स्वभावतः ॥ १९५ ॥ सत्यं तज्जायते तस्माद्रूढा चेयं सरस्वती ॥ अथोत्पातदोषापवा-
दः ॥ स्वस्व शान्त्या महोत्पाता विनश्यंति च सर्वशः ॥ सप्ताहाभ्यन्तरे दृष्ट्या शुभाये
व न दुःखदाः ॥ १९६ ॥ अथोत्पातानामुपहारः शान्तिश्च ॥ धूम्रकेतुर्म्महीकंपो दिग्दाहो धूलि
वर्षणम् ॥ भुवो गर्तश्च निर्घाता उल्कापातादयोऽपरे ॥ १९७ ॥ यस्मिन्देशे प्रजायंते म-
होत्पाता महाभयाः ॥ प्रजापीडा भवेत्तत्र विनाशः पृथिवीपते ॥ १९८ ॥ तदा शान्ति
र्विधातव्या देशे ग्रामे पुरेऽखिलैः ॥ शान्त्या दोषा विनश्यंति त्वन्यथा दोषमद्भुतम् ॥
इत्युत्पाताः अथ महर्घकाण्डम् तत्रादौ वर्षराजादिविचारः ॥ चैत्रमासि शिते पक्षेऽर्कोदये प्र-
तिपत्तिथौ ॥ यो वासरस्स राजा स्यात् तस्मिन्वर्षे ततः फलम् ॥ १९९ ॥ मेषेऽर्कस्य प्र-
वेशो यो वारो मंत्री स कथ्यते ॥ चापे धान्यपतिर्ज्ञेयः आर्द्रायां जलदाधिपः ॥ २०० ॥
रसाधिपस्तुलायां स्यात्कर्केऽस्य पतिस्तथा ॥ मकरे स्वर्णरत्नादिनीरसेशो बुधैः स्मृतः

मि ॥ २०१ ॥ अथ विंशोपकापनयनम् ॥ शाके त्रिघ्ने हृते शैले लब्धं स्थाप्यं पृथक् क्वचित् ॥ शे-
८८ षं द्विघ्नं शरैर्युक्तं वर्षास्याच्च ततः पुनः ॥ २०२॥ लब्धं शाकं प्रकल्प्यैवं कर्त्तव्या शोक्तवद्वि
या ॥ तृष्णा निद्रा तथालस्य मुद्यमः शांतिरेवच ॥ २०३॥ क्रोधो दंभोऽथ मित्रत्व मुत्सवः
पाप पुण्यकैः ॥ अथ प्रकारान्तरेण क्षुधाद्यानयनम् ॥ शाके वेदैर्हृते शैलै र्भक्तो लब्धं च पूर्वव-
त् ॥ शेषे च द्विगुणे सैकं क्षुधा तृष्णा सुषुप्तिका ॥ २०४॥ आलस्य मुद्यमः शांतिः क्रोधो-
लोभोऽथ वेदकः ॥ दंडोऽथ मैथुनं चौर्य्यं रसनिःपत्तिरेवच ॥ २०५॥ फलनिःपतिकृत्स्ना-
हः पुण्यं पापं तथैवच ॥ सर्वनिःपत्तिरित्येवं संपत्तिश्च यथाक्रमात् ॥ २०६॥ अथोत्पत्त्यानय
नम् ॥ शाकश्चाष्टगुणः खवेदै र्भक्तो लब्धं च पूर्ववत् ॥ द्विघ्नं शेषं त्रिभिर्युक्तं मुखं त्वंच र-
सोद्भवः ॥ २०६॥ फलोत्पत्तिस्तथा व्याधि रोगनाशस्तथैवच ॥ आचारश्चाप्यनाचारो स्मृ-
तिर्ज्जन्म ततः परम् ॥ २०७॥ चौरो पशामनं वन्हे र्भीति रग्नि शामक्रमात् ॥ अथ शालभाद्यानय-
नम ॥ शाके त्रिघ्ने हृते नंदै र्लब्धं स्थाप्यं तदुक्तवत् ॥ द्विघ्ने शेषं त्रिभिर्युक्तं शलभो मूषक २५०

स्तथा ॥ देवि कं पीत ताम्रं च स्वचक्र पर चक्र कम् ॥ २०८ ॥ अथ प्रकारान्तरेण शल्यानयनम् ॥
शैल घ्नो नव हृच्छा कः शेष द्विघ्नं युतं त्रिभिः ॥ शल्य भो मूष को देवं पीतं ताम्रं स्व चक्र क-
म् ॥ २०९ ॥ पर चक्रा गम श्चैव क्रमा देवं च पूर्ववत् ॥ अथोद्भिदादिप्रश्नानयनम् ॥ धाके वाणै
र्नगै रंध्रै शैलै र्निघ्नं पृथक् पृथक् ॥ सप्त भक्ता व शेषं यत् द्विघ्नं पंच युतं क्रमात् ॥ उद्भि-
ज्जः स्वेदज श्चैव जरायु प्रभवो ऽण्डजः ॥ २१० ॥ अथ युगानां प्रमाणम् ॥ द्वात्रिंशति सहस्रै श्च
युक्तं लक्ष चतुष्टयं ॥ प्रमाणं कलि वर्षाणां प्रोक्तं पूर्वै र्महर्षिभिः ॥ २११ ॥ युगानां कृत
मुख्यानां क्रमान्मानं प्रजायते ॥ कले र्मानं क्रमान्निघ्नं चतु स्त्रि द्वि मिते स्तथा ॥ २१२
कृतमानं १७२८००० त्रेतायाः १२९६००० द्वापरमानं ८६४००० कलिमानं ४३२००० ॥
अथ गतकलिमानम् ॥ खग शैलेन्दु रामाढ्ये शाके ऽब्दास्ते कले र्गताः ॥ ते र्विहीनं क-
ले र्म्मानं शेषे शेष कले र्स्थितिः ॥ २१३ ॥ अथ धर्म्मानयनम् ॥ स्वाभ्राभ्रां के श्च वेदै श्च-
कलि शेष स्समायुतः ॥ कलि मानेन संभक्ताद्यल्लब्धं धर्म्म एव सः ॥ २१४ ॥ ध्यान्द्दं च

ज्यो युतं जीव राशिभिस्तद्वर्नेऽ शाके ॥ लब्धं पुण्यंतु तन्न्यूना विंशतिः पाप मुच्यते ॥ २१५॥
१० अथ व्ययानयनार्थं ध्रुवांकाः ॥ रस ६ स्तिथयो १५ गजा ८ श्चैशल चंद्रा १७ नंदे रव १९ स्तथा ॥
स्व र्गाः २२ दिशः १० क्रमात् ज्ञेया रव्यादीनां ध्रुवा इमे॥२१६॥ निज राशि युते वर्ष स्वामिनो-
भवयोग के ॥ त्रिभि र्वाण युते भक्ते तिथि भि श्शेष संमिते ॥२१७॥ आया स्स्युस्त्रि गुणे लब्धे
श राढ्ये तिथि भि र्हृते ॥ शेषे व्ययाः क्रमात्स्व स्य राशीनां कथिता बुधैः॥२१८॥ अथ शाकात्सु-
भिक्षज्ञानम् ॥ शाके त्रि घ्ने हृते वाणैः शैले भक्तेऽथ शेष के ॥ क्रमान्मध्यं सुभिक्षंच दुर्भि-
क्षंच सुभिक्षकम् ॥ २१९ ॥ महर्घं समता ज्ञेया चैक तो रौर वं तु खे ॥ अथ संवत्सरात्सुभिक्षादि
ज्ञानम् ॥ त्रिघ्ने संवत्सरे युक्ते शरै र्भक्तेऽथ सप्तभिः ॥ चतुर्द्वित्रि मिते शेषे सुभिक्षं विपुलं
भवेत्॥ २२०॥ निरं ब के च दुर्भिक्षं षट् भू संख्ये च मध्यमम् ॥ शून्ये तु रौर वं ज्ञेयं फलं
वर्षे बुधैः सदा॥२२१॥ अथापरः प्रकारः ॥ द्विघ्न संवत्सरो रामै र्हृतो भक्तो नगै स्तथा ॥ शेषे-
वाण मिते युग्मे सुभिक्षं हायनं भवेत्॥२२२॥ वेद चंद्र मिते ज्ञेयं दुर्भिक्षं खलु रौरवम् ॥ २- ३५०

सा न त्तमिते मध्यमे तदर्घ फलं बुधैः ॥ २२४ ॥ अथ राजादीनां वर्षे संक्षेपात्फलम् ॥ राजामात्य-
नृपादीनां वक्ष्येि संक्षेपतः फलम् ॥ गुरुशुक्रादयो धीशाः संति चेज्जन सौख्यदाः ॥ २२५ ॥
सुभिक्षं शोभना वृष्टिर्देशस्वास्थ्यं प्रकुर्वते ॥ शनि भौमौ प्रकुर्वाते दुर्भिक्षं विग्रहं भयम् ॥
२२६ ॥ अल्प सौख्य प्रदः सौम्य स्वल्प सुख प्रदो रविः ॥ फलं स विस्तरं चैषां विज्ञेयं संहि-
तादिषु ॥ २२७ ॥ अथ दीप मालायां नष्टयोगफलम् ॥ यदि भवति कदाचित्कार्त्तिके नष्ट चंद्रे शनि-
रवि कुज वारे स्वाति चायुष्म योगे ॥ गगन चर पशूनां जंगम स्थावराणां नृपति जनवि-
नाशो राज्य भंगस्तु चोक्तः ॥ २२८ ॥ अथापरेणापि ॥ दर्शे चायुष्मतो स्वातौ पापाहे मासि का-
र्तिके ॥ प्रदोषे चेत्प्रजापीडा राज युद्धाद्युपद्रवाः ॥ २२९ ॥ अथ ज्येष्ठ प्रति पदादि योगः ॥ ज्ये-
ष्ठे शुक्ल तिथावाद्ये चन्द्रेज्ये भृगु वासरे ॥ सुभिक्षं शोभना वृष्टि दुर्भिक्षं पाप वासरे ॥
२३० ॥ अथाषाढ द्वितीया नवमी योगः ॥ आषाढे शुक्ल पक्षे च द्वितीया नवमी दिने ॥ चन्द्रे-
ज्य भृगु वारे स्यात्सु वृष्टिश्च समर्घता ॥ २३१ ॥ बुधे साम्यं रवौ तापः कुजे वृष्टिर्न जायते ॥

शनि शनिवारे प्रजा पीडा दुर्भिक्षं रौरवं तदा॥ २३२॥ अथ शनिचारफलम्॥ गुर्ज्जरे ऽजे शनौ-
१९ पीडा प्रभा सार्बुदयो वृषे॥ मरुस्थले च युग्मे स्यात् कर्के काश्मीरमंडले॥ २३३॥ म्लेक्ष प्र-
स्ये च सिंहे स्यात् कन्यायां मालवे तथा॥ तुलादित्रि पृथिव्यां च दुर्भिक्षं जनपीडनम्॥
॥२३४॥ सुभिक्षं च मृगे कुंभे मीने सर्वप्रजाक्षयः॥ अथ कूर्मचक्रम्॥ कूर्म्मचक्रे शनिर्म-
ध्ये ततः प्राच्यादिषु क्रमात्॥ २३५॥ नाशयेत्क्रमतो देशान् कृत्तिकाद्यैस्त्रिभिस्त्रिभिः॥
निजाधिष्ठितभे ईशानं नैर्वेदि सुखाः खलः॥२३६ मागधाद्यान् कलिंगादीनां वंतिकमु-
खांस्तथा॥ ततो कोंकनपौड्रादीन् सिंधुसौराष्ट्रकादिकान्॥ २३७॥ पौलिंद चीनका-
घांश्च कुरु काश्मीर मत्स्यकान्॥ खलवाल्हीकपाटांश्च नवखंडानि भास्तथा॥२३८॥
दृष्ट्या स्वाधिष्ठिता हे शादीश्च न्यां यमदिग्गतान्॥ अथ ग्रहचारवर्षणान्यहर्षादिः॥ मेषे गुरौ
सुभिक्षं च सुवृष्टिश्च सुखी नरः॥ वृषे गुरौ स्वल्पवृष्टिः प्रजापीडा च विग्रहः॥२३९॥ अना-
वृष्टिः प्रजानाशो रौरवं मिथुने गुरौ॥ कर्के गुरौ महावृष्टिः छत्रभंगो महर्घता॥ २४०॥

सिंहे गुरौ सुभिक्षं च सुवृष्टिश्च प्रजासुखं ॥ कन्या गुरौ रोग पीडा दुर्भिक्षं स्वल्प जन्म च॥
२४१ ॥ तुले गुरौ स्वल्प शस्यं वहु क्षीरं प्रजायते अलौ जीवे च दुर्भिक्षं राज चौर रणा
द्भयम्॥२४२॥ चापे गुरौ सुधा वृष्टिः शुभ शस्यं सुखी जनः॥ दुर्भिक्षं मकरे जीवे राजयु-
द्ध पशु क्षयम् ॥२४३॥ कुंभे गुरौ सुभिक्षञ्च धातु मूल महर्घता ॥ दुर्भिक्षं दक्षिणे दे-
शे नान्य देशे झषे गुरौ ॥२४४ ॥ अथाषाढी पूर्णि विचारः ॥ आषाढी पूर्णिमायां च वाय-
व्ये यदि मारुतः ॥ मशका मूषका कीटा जायंते शलभा स्तथा॥२४५॥ आषाढी पूर्णि-
मायां चेद् निलो वाति नैऋते ॥ अनावृष्टि धान्य नाशो जलं कूपेन दृश्यते॥ २४६ ॥ आ-
षाढी पूर्णिमायां स्यादुत्तरे यदि मारुतः ॥ धर्म्म शीला स्तथा लोका धन धान्यं गृहे गृहे॥
२४७॥ आषाढी पूर्णिमायां चेदीशाने यदि मारुतः॥ सुखिनो हि नरा लोका गीतं वाद्यम-
होत्सवे॥२४८॥वन्हि कोणे वन्हि भीतिः पश्चिमे च जलाद्भयम् ॥ अन्यत्र यदि वायुस्स्या
त्सुभिक्षं जायते सदा॥२४९ ॥ आषाढ्यां भास्करा स्ते सुर पति ककुभो वाति वाते सुवृष्टिः

संभि शस्य ध्वंसं प्रकुर्य्याद्यदि दहनदिशो मन्दवृष्टिर्यमेन ॥ नैर्ऋत्या मन्ननाशो वरुणव-
३५४ हुजलं वायुना वायुकोपः कौवेर्य्यां च भवति वसुमती तद्वदीशानकोणे ॥ २५० ॥ सर्वमा-
से पूर्णिमायां भूमिकंपो यदा भवेत् ॥ उल्का तारा वज्रपातः परिधिः शशिसूर्य्ययोः ॥
२५१ ॥ धूम्रकेतुः शक्रचापं ग्रहणं वहुधा तथा ॥ तदा सकलवस्तूनां ज्ञायते च महर्घ-
ता ॥ २५२ ॥ अथ प्रतिमासे दर्शफलम् ॥ शुभवारान्विते दर्शे सुभिक्षं च प्रजासुखम् ॥ पापवा-
रान्विते दुःखं तदा धान्यमहर्घता ॥ २५३ ॥ रविवारेण संयुक्ता यदा स्यात्पौषज्येष्ठयोः ॥
अमावास्या तदा पृथ्वी रुंडमुंडा च जायते ॥ २५४ ॥ चैत्रस्य शुक्लपंचम्यां पूर्ववायुर्दिनागमः ॥
भाद्रे गुणत्रयं मौल्यं शस्यानां ज्ञायते तदा ॥ २५५ ॥ ज्येष्ठस्य शुक्लपंचम्यां वृष्टिः पश्चिममारु-
तः ॥ तदा चतुर्गुणं मौल्यं धान्यानां कार्तिके भवेत् ॥ २५७ ॥ श्रावणे शुक्लपंचम्यां वृष्टिर्वा-
तो दिनद्वयम् ॥ दक्षिणे पश्चिमे ज्ञेयं दुर्भिक्षं धान्यसंक्षयः २५८ अथ ग्रहचारवशात्सर्ववस्तूनां म-
हर्घताज्ञानम् ॥ यदि तिष्ठति भौमस्य क्षेत्रे कोऽपि ग्रहस्तदा ॥ षण्मासं तु च धान्यानां ३५०

सं.टि. जायते च महर्घता ॥२५९॥ शुक्र क्षेत्रे कुजे मासं द्वयं सर्व महर्घता ॥ चंद्रेऽत्र दिन नाथे च स-
२५५ र्वरोगो ऽशुभं तदा ॥२६०॥ शनौ राहौ सर्व धान्य महर्घ राज विग्रहः ॥ शुक्र क्षेत्रे च चंद्रे च-
चंद्र क्षेत्रे भृगो स्सुते ॥२६१॥ पाषंडानां भवे द्वृद्धि र्धान्यानां च महर्घता. रवि क्षेत्रे भृगोः पुत्रे प-
शूनां च महर्घता ॥२६२॥ बुध क्षेत्रे शनौ चन्द्रे सर्व धान्य महर्घता ॥ शुक्र क्षेत्रे गुरौ भौमे कर्प्पा-
सादि महर्घता ॥२६३॥ भौम क्षेत्रे शनौ राहौ ताम्रा दीनां महर्घता ॥ शनि क्षेत्रे शनौ रा-
हौ सुभिक्षं चंद्र भास्करे ॥२६४॥ पशुनाशो धान्य वृद्धि र्गुडादीनां महर्घता ॥ गुरु क्षेत्रे शनौ
राहौ पशुनाश स्तृण क्षयात् ॥२६६॥ भौमे राज विरोधश्च बुधे वृष्टिश्च भूयसी ॥ भौम क्षे-
त्रे यदा संति राहु भौमार्क भार्गवाः ॥२६७॥ षण्मासे गुड कर्प्पास घृत क्षीर महर्घता ॥ मंद
क्षेत्रे यदा संति मन्द राहु बुधा स्तथा ॥ २६८ ॥ चतुः पदानां नाशश्च द्विपदानां च जायते ॥
भौम क्षेत्रे यदा संति शुक्र भौम निशा कराः ॥२६९॥ तदा मुक्ता पशूनां च शंखस्य च महर्घ-
ता ॥ शुक्र भौमौ गुरु क्षेत्रे प्रजा पीडा च जायते ॥२७०॥ ग्रह राशि समा योगे फलमे तत्स-

कीर्त्तिवर्म् ॥ अथ राशिपरत्वेन ग्रहोदयफलम् ॥ चंद्रोदये कुजक्षेत्रे तुषधान्यस्य वृद्धयः
चंद्रोदयो भृगुक्षेत्रे स्वल्पवृद्धिः क्रियादिके ॥ २७१ ॥ प्रजापीडा बुधक्षेत्रे सोमशुक्रोदये
भवेत् ॥ रविक्षेत्रे तुला वृद्धिः शनिसोमभृगूदये ॥ २७२ ॥ चंद्रक्षेत्रे राहुचंद्रबुधा-
नामुदयो यदि ॥ षण्मासं स्याच्च दुर्भिक्षमतिवृष्टिश्च जायते ॥ २७३ ॥ उदितो बुधक्षे-
त्रे च यदि राहुशनैश्चरौ ॥ पशुक्षयः प्रजापीडा धान्यानां च महर्घता ॥ २७४ ॥ शु-
क्रक्षेत्रे सोमसूर्य्यसूर्य्यपुत्रोदयो भवेत् ॥ उदयास्तमनं पीडा जायते च महर्घता ॥
यदोदयः शनिक्षेत्रे भौमभास्करयो भवेत् ॥ घृतानां च तदा वृद्धि गुडानां रक्तवा-
ससाम् ॥ २७६ ॥ यदा समुदयं याति शनिक्षेत्रे शनैश्चरः ॥ तदा लवणानां काष्ठानां लो-
हानां च महर्घता ॥ २७७ ॥ अथ नक्षत्रस्थितग्रहवशान्महर्घताज्ञानं ॥ गुरुर्यदा विशाखा-
यां तदा धान्यमहर्घता ॥ मंगलस्य च कालस्य प्राप्तो सर्वत्र मंगलम् ॥ २७८ ॥ अश्वि
वर्णो यदाद्रायां शनिस्ते तदा भयम् ॥ बुधे भाद्रे च दुर्भिक्षं सुभिक्षं भृगुनंदने ॥

॥ २७९ ॥ सुभिक्षं चानुराधायां यदि शेषग्रहाः स्थिताः ॥ कल्याणं चैव सौभाग्यमश्ले-
षा संस्थिते गुरौ ॥ २८० ॥ कर्प्पासा बहवो मंदे भौमे कटकपीडनम् ॥ बुधे तिलाश्च मा-
षाश्च महर्घं वर्षकालतः ॥ २८१ ॥ सूर्ये सर्वाणि धान्यानि महर्घाणि भवंति च ॥ शु-
क्रे च महती वर्षा शस्यानि सकलानि च ॥ २८२ ॥ मूले गुरौ कुलत्थानां मुद्गानां व-
हुधा भवेत् ॥ भौमे मूलस्य चापस्य बुधे च सर्वसंपदः ॥ २८३ ॥ पूर्वाषाढा गते भौ-
मे पीडा स्यात्पशुपक्षिणाम् ॥ केतौ महर्घता धान्ये पूर्वाषाढ गते भवेत् ॥ २८४ ॥
उत्तराषाढके जीवे गुडानां च महर्घता ॥ भौमे च पुष्पजातीनां जायते च महर्घता
॥ २८५ ॥ अभिजिन्नाम्नि नक्षत्रे यदा छाया सुतो भवेत् ॥ सर्वशस्यानि जायंते सुभि-
क्षं च कुजे तथा ॥ २८६ ॥ श्रवणे च यदा जीवस्तदा स्युः सर्वसंपदः ॥ बुधे नाशश्च भू-
पानां शनौ भूरि उसीरकः ॥ २८७ ॥ कृत्तिकायां च रोहिण्यां यदा जीवो हि तिष्ठति ॥
मध्यमानि च शस्यानि तदा वृष्टिश्च मध्यमा ॥ २८८ ॥ आर्द्रायां मृगशीर्षे च यदा वाक्-

स

संटि स्पतेः स्थितिः ॥ सुभिक्षंच सुवृष्टिश्च प्रजानांच सदा शिवम् ॥ २८९ ॥ पूर्वाफाल्गुणी
१५५ द्वये हस्ते मघायां च यदा गुरुः ॥ सुभिक्षंचसुवृष्टिश्च प्रजानां स्यादरोगता ॥ २९०
चित्रास्वात्योर्यदा जीवस्तदा चित्राः पयोधराः ॥ विचित्राणि भवन्त्येव शस्यानि च
क्वचित् क्वचित् ॥ २९१ ॥ विशाखा मैत्रयोर्जीवे धान्यंवर्षाच मध्यमं ॥ ज्येष्ठामूले मास
युग्मं विष्टिर्मास द्वयेन च ॥ २९२ ॥ पूर्वाषाढोत्तराषाढे स्थितो यदि बृहस्पतिः ॥ तदा रोगं
सुभिक्षंच सुवृष्टिश्च प्रजायते ॥ २९३ ॥ अनावृष्टिश्च दुर्भिक्षं रेवत्यां संस्थिते गुरौ ॥
धनिष्ठायांच शुक्रेच पीडा भवति हस्तिनाम् ॥ २९४ ॥ क्रूरा वक्रगताः खेटास्तौ स्यात्य-
घति चारगाः ॥ तदा भूपक्षयो युद्धं जगद्घोर भयार्दितम् ॥ २९५ ॥ अथैकमासे पंच वार फल
म् ॥ शुक्लाद्ये मासके पंच पाप खेटस्य वासराः ॥ प्रजा पीडा भवेत्तत्र धान्यस्यापि म-
हर्घता ॥ २९६ ॥ मासे पंच शुभा वारा यद्येकस्मिन्प्रजायते ॥ सुभिक्षं सर्व शस्यानां नरा
च सुखिनो जनाः ॥ २९७ ॥ पौषे पंच शनिश्चैव माघे पंच रविस्तथा ॥ फाल्गुने पंच भौम-

श्च महीनाशाय कौवलम् ॥ २९८ ॥ अथ चंद्रस्य शृंगोन्नतिस्तत्फलम् ॥ चंद्रे यामोन्नतां मा।
३५९ नमेषगोऽभ्युदितो मतः ॥ समशृंगो वृषे कुंभे शेषभेषूत्तरोन्नतः ॥ २९९ ॥ याम्योन्नते
च दुर्भिक्षं विरुद्धं स्यात्समे विधौ ॥ सुभिक्षं सौम्यदिग्भागे चोन्नते मृगलांछने ॥ ३०० ॥ मू-
लाकारे विधौ भीतिः शोणिते महतो रुजः ॥ अथ प्रतिमाससंक्रांतिवशात्समर्घमहर्घज्ञानम् ॥
सुभिक्षं संक्रमे सौम्ये वारेऽधिकमुहूर्तके महर्घं पापवारे वा मुहूर्ते चाक्षभूमिते ॥ ३०१ ॥
पूर्वसंक्रमभाह्नित्रिमिते च संक्रमे रवेः ॥ सुभिक्षं स्याच्चतुःपंचमिते भेतु महर्घता ॥ ३०२ ॥
षडभे संक्रमे चाति दुर्भिक्षं रौरवं भवेत् ॥ अथ ग्रैष्मशारदधान्यनिःपतिज्ञानम् ॥ वृषे संक्रम
णे भानोः केन्द्रस्थांत्यगते शुभैः शारदी धान्यनिष्पत्तिस्तु माहायने मता ॥ ३०३ ॥ पापै
रेवं स्थितैः स्वल्पा मिश्रैर्मिश्रा प्रकीर्तिता ॥ पापा द्यूनगते नष्येद्धन्नमपि शस्यकम् ॥
द्यूनशत्रुगते पापे निष्पत्तिस्त्वल्पिका भवेत् ॥ इत्थं वृश्चिकसंक्रांतौ विज्ञेयं ग्रीष्म
धान्यकम् ॥ ३०५ ॥ चापादित्रितये सूर्ये सौम्यैर्युक्ते सिते गृहैः ॥ सरद्धान्यं ३५९

संधि समर्घं स्यात् ग्रस्तं तच्चान्य जीविभिः॥ ३०६ ॥ पापैर्युक्ते क्षिते धान्यं महर्घं जायते ऽखि-
१६० लम् ॥ एवं मेषाद्विगे ग्रैष्मे धान्यं ज्ञेयं विचक्षणैः ॥ ३०७ ॥ अथ संक्रांतिवशाद्वर्षेषोर्ल
मास्यो रुत्पात दिवसात् धान्यादीनां समर्घ महर्घ ज्ञानम् ॥ ग्रैष्मे शस्यं १ ततो मूलं २ रसधा-
न्यं ३ घृतादिकं ४ हेमाद्यं ५ तुरगो ६ वस्त्र ७ मणि ८ कान्चा ९ बु १० धान्यके ११ ॥
३०८ ॥ मूलंच १२ क्रम तो ज्ञेय मेष्पाद्यं वैयाले क्षिते ॥ दर्शे वा पौर्णि मायां चेदु परा
गो ऽति वर्षराम् ॥ ३०९ ॥ परिवेष स्तथा दंड उल्का पाताद्युपद्रवाः ॥ जायंते ऽत्र तदाते-
षां वस्तूनां च महर्घता ॥ ३१० ॥ रवौ सौम्य क्षिते ज्ञेया उत्पाते ऽत्र महर्घता ॥ अथ वृक्षादे
पत्र पुष्प फलाद्ये धान्यादिनि ष्पति ज्ञानम् ॥ वृक्षा दौ बहुभिः पुष्पै र्महा वृष्टिः प्रजायते ॥ पत्रै
स्त्वल्पतरा वृष्टिः दूर्वा भिक्षे त्वयो ऽधिकाः ॥ ३११ ॥ मधुकै र्बहु गो धूमा जवा ऽस्युर्वट जैः
फलैः ॥ सुभिक्षं नाग निंबैः स्या च्चाल वृक्षैश्च शालयः ॥ ३१२ ॥ अंब्वस्या ऽधिकं धा-
न्य मर्जुना ऽधिकं जलम् ॥ क्षेमं सा ग्रैश्च पालाशैः कोद्रवा जंबु तस्तिलाः ॥ ३१३ ॥ दुर्भि क्षं

सर्वीस्त्वं खदिरै रोगः कुटजैः परिकीर्तितः ॥ इतिसमर्घकांडसमाप्त ॥ अथ वृष्टि ज्ञानार्थ मेघ गर्भज्ञानम्
३६१ मार्गे शुक्ला दितो ज्ञेयो मेघ गर्भ समुद्भवः ॥ फाल्गुणे ताम्र वर्णा कांत्स्निग्धा श्राच्च ख-
गानिलात् ॥ ३१४ ॥ चैत्रेतु परिघे वृष्ट्या वायु नावाभ्रेरेखया ॥ अथकेषांचिन्मतातरे
केचिन्मार्गादि मासेषु प्रोचु गर्भस्य लक्षणम् ॥ गर्ज्जना त्पवना त्तोय वर्षणा दिघु-
तोऽथवा ॥ ३१५ ॥ अथ शुभ गर्भलक्षणानि ॥ श्वेत नीलांड जाभ्राच न चाति विगल
ज्जलाः ॥ शस्त गर्भाश्च ते मेघा उद् गीशान पूर्वजाः ॥ ३१६ ॥ पुष्टिं प्रयांति ते ग-
र्भैः विद्यु द्वाताभि वर्ज्जितैः ॥ भाद्रा षाढ द्वयो त्पन्ना विशाखोत्या वहूदकाः ॥
३१७ ॥ अथ गर्भ धारणा दिना द्वृष्टि ज्ञानम् ॥ वृष्टि गर्भा द्दमाख्य पक्षे विंश्व १३ मितै-
र्भवेत् ॥ रात्रि गर्भे दिवा वृष्टि र्दिवा गर्भे निशि स्मृता ॥ ३१८ ॥ अथ प्रकारां तरेण गर्भाद्वृ-
ष्टि ज्ञानम् ॥ आरभ्यै कादशी कृष्णां कृष्णादौ माघमासके ॥ द्वादश स्वपि घस्नेषु विद्यु द्वाता
…र्ज्जितैः ॥ ३२० ॥ रोहिण्यादिषु सूर्य्य स्य भेषु वृष्टि र्भवेत्क्रमात् ॥ अथ पुनरन्य प्र- ३६१

शुक्लायाश्च तुर्यदिवसे शुच ॥ श्रावणादौ क्रमाद्वृष्टिर्मेन्द्रे भूरि स्तैः समीरणैः ॥ ३२७ ॥
अथ स्वात्यादिषु वृष्टौ श्रावणादावनावृष्टिः ॥ ज्येष्ठे चतुर्षु धिष्ण्येषु स्वातीमारभ्य वर्षणे ॥ क्रमा-
च्छ्रावणके वृष्टिर्न्न भवेन्नात्र संशयः ॥ ३२८ ॥ अथाषाढ शुक्लद्वितीयादि दिनचतुष्टय फलम् ॥
आषाढे मासि शुक्लायां द्वितीयायां प्रवर्षणात् ॥ तृतीयायां पुरो वायुर्मेघः पूर्वस्य दिग्गतः
॥ ३२९ ॥ चतुर्थ्यां जलदः प्राच्यां दक्षिणे यदि मारुतः ॥ पंचम्यां पूर्वदिङ्मेघस्तदा श्रा
वण मासतः ॥ ३३० ॥ ध्रुवं वृष्टिः शुभा ज्ञेया क्रमान्मासचतुष्टये ॥ चतुर्ष्वेषु दिनेष्वेव
यदि वृष्टिर्न्निरन्तरम् ॥ ३३१ ॥ तदा स्यादिति वृष्टिश्च धान्यनाशः प्रजायते ॥ याम्य-
प्रत्यग्भवे वायौ घस्रे दुर्भिक्षमीरितम् ॥ ३३२ ॥ तृतीया पंचमी घस्रे यद्युदक् पूर्वजो मरु
त् ॥ तदा स्याद्धान्यनिष्पत्तिर्वै फुल्ला वृष्टिरुत्तमा ॥ ३३३ ॥ अथ श्रावण शुक्ल पंचमी फल-
म् ॥ पञ्चम्यां श्रावणे शुक्ले द्वाहं वृष्टिर्भवेद्यदि ॥ याम्यप्रत्यग्भवे ह्यायुर्दुर्भिक्षं जायते
तदा ॥ ३३४ ॥ अथ सूर्यस्य रेवत्यादि भेषु वृष्टि फलम् ॥ रेवत्यां वर्षणे तोयं नश्येद्धान्यम

श्चिने ॥ भरण्यां तद्वयं वृष्टिः कृत्तिकायां न चेद्भवेत् ॥ ३३५ ॥ रोहिण्यां गर्जने वृष्टि
ऽयं मास द्वयो तरम् ॥ मृगशीर्षे यदा न स्याद्वृष्टिर्भूयो बहूदका ॥ ३३६ ॥ अथ संक्रांति दिने
वृष्टिफलम् ॥ संक्रांति दिवसे वृष्टौ मार्ग कार्तिकयोर्यदा ॥ वर्षन्त्मध्यमं ज्ञेयं पौषे
माघेऽति चोत्तमम् ॥ ३३७ ॥ सुभिक्षं च सुभा वृष्टिः फल्गुणादि चतुष्टये ॥ रोग स्त्वाषा
ढमासे स्याच्छ्रावणे वृष्टि रुत्तमा ॥ ३३८ ॥ भाद्रे रोगस्तदा सौख्य माश्विने वर्षणे भवे
त् ॥ ३३९ ॥ अथ काक नीड फलम् ॥ सवृक्षे काक नीडे स्यात्त्रतीच्यां वृष्टि रुत्तमा ॥ उद-
ग्यां स्ये भवेन्मध्ये नैऋते वांतिमा स्मृता ॥ ३४० ॥ अल्प वृष्टि रधो ज्ञेया तदन्यं स्या
च्छिवेऽनिले ॥ मध्ये मध्याऽथ वृक्षाग्रे वकुला वृष्टि रीरिता ॥ ३४१ ॥ ईति भीति र्महा
घोरा नीडे सर्व दिशां गते ॥ नीडे संकट के भीति रसानां जायते ध्रुवम् ॥ ३४२ ॥ प्रागुद-
क्पश्चिमा ईस्ये सुवृष्टिः कैश्चिदीरिता ॥ अथ टिट्टिभांड फलम् ॥ स्थिते धूम्र प्रदेशे घुटि-
ट्टिभांडे घृ चोत्तमा ॥ वृष्टिः संजायते मासैर्धो वक्रांड संख्यकैः ॥ ३४३ ॥ निम्न प्रदेशसंस्थे

ग्रि० षुस्वल्पा वृष्टिःप्रजायते ॥ वृष्टि नैवभवेन्मासैश्चोर्द्ध वक्रांड संख्यकैः ॥ ३४४ ॥
३६१ अथरोहिणीचक्रम् ॥ हाल्पाकारंलिखेच्चक्रं मेष संक्रांति भादितः ॥ चतुर्दिक्षुसमुद्राश्च-

| पर्वत | नद | संधि | समुद्र | संधि | नद | नद | पर्वत | प |
|---|---|---|---|---|---|---|---|---|
| प | ५ | ४ | ३ | २।१ | २८ | २७ | २६ | प |
| त | ६ | | | | | | २५ | त |
| स | ७ | | | | | | २४ | सं |
| सं | ८।९ | | | | | | २२।२३ | सं |
| सं | १० | | | | | | २१ | सं |
| त | ११ | | | | | | २० | त |
| प | १२ | १३ | १४ | १५।१६ | १७ | १८ | १९ | प |

चतुःकोणेषु पर्वताः॥ ३४५॥ समुद्रपार्श्व-
योर्द्वौ तट स्तच्छै लयो स्तथा ॥ मध्येऽष्टौ
संध्ययोः स्तत्र साभिजिद्भगणान्न्यसेत् ॥
३४६॥द्वयंद्वयंसमुद्रेषुतथैकैकं तटाद्रिषु ॥ रो-
हिणी संस्थिता यत्र ज्ञेयं वृष्टि फलं तथा
॥ ३४७॥ तटेषु शोभना वृष्टि र्महावृष्टि
स्तु सागरे ॥ ऊना वृष्टिर्गिरौ देशे खंडे वृष्टि
स्तु संधिषु ॥ ३४८ ॥ अथ सप्त नाडी चक्रम्
कृत्तिकादि लिखे च्चक्रं साभित्सप्तनाडिकम् ॥ चंडा वायुस्तथा वन्हिः सौम्यानी राज- ३६१

म.ग्रं. ला स्मृता ॥ ३४९ ॥ नाडीनां सप्त नामानि ज्ञेयान्येतानि पंडितैः ॥ क्रमान्मंदार्कौ भौमे
३९६ ज्य शुक्र ज्ञाब्जा स्वदीश्वराः ॥ ३५० ॥ अथैतदेव स्पष्टयति ॥ चंडाख्या भरणी हृदू

| अथ सप्तनाडीचक्रम् | | | | | | |
|---|---|---|---|---|---|---|
| चंडा | वाता | वन्हि | सौ | नीरा | जलं | अमृता |
| कृ | रो | मृ | आ | पु | पु | श्ले |
| वि | स्वा | चि | ह | उ | पू | म |
| अ | ज्ये | मू | पू | उ | अभि | श्र |
| भ | अ | रे | उ | पू | श | ध |
| श | सू | भ | वृ | शु | बु | चं |

विशाखा द्वितयं शनेः ॥ ज्येष्ठाश्वि रोहिणी स्वाती वायु नाडी रवेः स्मृता ॥ ३५१ ॥ चित्रा मूलं मृगो त्यं च दहना ख्या कुजस्य च ॥ पूर्वाषाढा करो भार्द्रा सौम्या नाडी बृह स्पतेः ॥ ३५२ ॥ पूर्भोपाच पुनर्धिष्ण्य उफान्नीर भृगोः स्मृ ता ॥ पूफा रता भिजि त्पुष्यं जला नाडी बुधस्य सा ॥ ॥ ३५३ ॥ श्रवद्वयं मघाश्लेषा इंदोरमृत नाडिका ॥ अ यैतासु ग्रह संस्थिते फलम् ॥ ग्रहाः प्रयेक नाडीस्थाः सौम्याः

पापा यथा तथा ॥ तेभ्यो नाडीफलं वाच्यं सदसद्धि विचक्षणैः ॥ ३५४ ॥ चंडा नाड्यां महा वातान् वात नाड्या न याति लक्ष् ॥ वन्हि नाड्यां स्थि तादाहं सौम्य नाड्यां महा र्घकं ॥

३९६

म. ति. ॥३५५॥ नीरनाड्यां पयोवृष्टिं जलनाड्यां च वर्षणम् ॥ कुर्वन्त्यमृतनाड्यां च महा-
३९६ वृष्टिं नभश्चराः ॥३५६॥ एकोऽयं निजनाडीस्थो दत्ते तत्तत्फलं ग्रहः ॥ कुजस्तु सर्वना-
डीषु स्थितो नाडीसमुद्भवम् ॥३५७॥ आर्द्रादिऋक्षे गते सूर्ये नाड्यो क्ये फलमुच्यते ॥ च-
द्रं न केच नाडीस्थाः पापाः सौम्याश्च खेचराः ॥३५८॥ मिश्राश्चंद्रसमायुक्तास्तद्दिने
वृष्टिरुत्तमा ॥ तोयराशिगता मिश्रास्तावद्दृष्टिं प्रकुर्वते ॥३५९॥ यावन्नो याम्यगश्चंद्रः
केवलः स्वल्पवृष्टिदः ॥ अमिश्रैः खेचरैः सौम्यपापैर्विद्धो यदा शशी ॥३६०॥ पानी-
यं च तदा तुच्छं धान्यादीनां च नाशनम् ॥ यस्य खेटस्य नाडीस्थो विद्धस्तेन ग्रहेण च
॥३६१॥ युतश्चेद्वृष्टिदो ज्ञेयो यदि क्षीणतरो नहि ॥ चंद्रः पीयूषनाडीस्थः स्निग्धैः
खेटैश्च संयुतः ॥३६२॥ त्रिचतुःपंच सप्ताहं शुभवृष्टिप्रदो मतः ॥ जलनाडीस्थिते
चंद्रे मिश्रखेचरसंयुते ॥ दिनार्द्धमत्यल्पदृष्टिः पश्चाद्ज्जायते शुभा॥ नीरना-
ड्यां गते चंद्रे मिश्रैः खेटैश्च संयुते ॥३६३॥ पादोनं तद्दिनं वृष्टिं वैकृतोयाभवेद्भुवा ॥ ३९६

नं.लि नी शरव्ये जलधीभृयं नाडीस्थाः खेचराः क्रमात्॥ ३६४॥ भृत्य १९ के.१२ रस ६ संख्या
३९० कान् वासरान्वक्तु वृष्टिदाः॥ सौम्या नाडी स्थिताः सर्वेऽप्यहं वृष्टिप्रदाः खगाः ॥
॥ ३६५॥ चंद्रवाय्वग्नि नाडीस्थाः महावाता तपप्रदाः॥ योगे शुभाधिके नाडी नि
र्जला सजलप्रदाः॥ ३६६॥ योगे क्रूराधिके ज्ञेया सजला निर्जला बुधैः॥ सौम्यनाड्यां
स्थिता पापा भ्रना वृष्टिकरा मताः॥ ३६७॥ शुभास्तोयाश्रकाग्ने स्युस्स्वल्पवृष्टिप्र-
दास्तदा॥ एकनाडीस्थिता भौमजीवचंद्रमसौ यदा॥ ३६८॥ वारिपूर्णा भवेत्पृथ्वी व-
हुवृष्ट्या तदाखिला॥ भृगुसौम्यौ यदैकत्र स्यातां जीवान्वितौ तदा॥ ३६९॥ वृष्टि-
स्यादतुला कास्माच्चंद्रयोगे विशेषतः॥ भृगुचंद्रमसौ पापैः खेचरैर्यदि संयुतौ॥
॥ ३७०॥ तदा स्वल्पोदका वृष्टिः जलयोगे महत्यपि॥ इति सप्तनाडीफलम्॥ अथ
शुक्रस्थितिवशाद्ग्रहयोगवशाच्च वृष्टिज्ञानम्॥ मघादिपंचधिष्ण्यस्थः शुक्रः प्रागुदितोऽनि-
शम्॥ वृष्टिकृत्यश्विमाशगस्थः स्वात्यादित्रितये स्थितः॥ ३७१॥ वैपरीत्यमितो- ३९८

जातो भृगुः कुर्य्याद्दवर्षणम् ॥ कुर्य्यातां बहुलां वृष्टिं बुध शुक्रौ च संयुतौ ॥ ३७२ ॥
समुद्रं शोषयितुं शक्तस्तयोरंतर्गतो रविः ॥ शुक्रात्सप्तमगश्चंद्रो वृष्टिदस्स्याच्छुभेक्षितः
॥ ३७३ ॥ मंदाद्विद्यून कोणस्थश्चंद्रमा वृष्टिदस्तदा ॥ ग्रहाणामुदये चास्ते राश्य
न्तर्गतेऽयने ॥ ३७४ ॥ संयोगे वापि पक्षांते प्रायो वृष्टिः प्रजायते ॥ उदयास्तमनं शु-
क्रो बुधश्च वृष्टिकारकः ॥ ३७५ ॥ चलत्यंगारके वृष्टिस्त्रिधा वृष्टिः शशाने श्वरे ॥ वारि
पूर्णां महीं कृत्वा पश्चात्संचलते गुरुः ॥ ३७६ ॥ शुक्रे चास्तमिते मंदे त्रिविधेऽपि प्रजा-
यते ॥ भौमार्क्की एकराशौ चेदन्योन्यं समसप्तगौ ॥ ३७७ ॥ अथार्द्रादिरविनक्षत्रप्रवेशे
स्त्रीपुंयोगादौ वृष्टिज्ञानम् ॥ स्त्रीसंज्ञानि दशार्द्रातो भानि प्रोक्तानि कोविदैः ॥ विशा-
खादित्रयं क्लीबं पुंसं ज्ञानीत राणि च ॥ ३७८ ॥ रवेर्धिष्ण्यप्रवेशस्य काले चंद्रार्कयोर्य-
से ॥ धिष्ण्ये च यादृशो स्यात्तां विज्ञेयं तद्वशात्फलम् ॥ ३७९ ॥ स्त्रीपुंसोस्तु महावृष्टि
रल्पा स्त्रीक्लीबयोः क्वचित् ॥ अभ्रच्छाया स्त्रियोः पुंसोः क्लीबयोर्वा न किंचन ॥

॥ ३८० ॥ तीय वार विलग्ने च वृष्टि योगे यदा रवेः ॥ नक्षत्रं च प्रवेश स्यात्तदा वृ-
ष्टिस्तु शोभना ॥ ३८१ ॥ निशायाम ई रात्रे वार वेऋक्ष प्रवेशने ॥ वहु तोया सुवृ-
ष्टि स्स्यादन्य था नैवजायते ॥ ३८२ ॥ अथ सूर्य र्क्ष चंद्र र्क्षतो वृष्टि ज्ञानम् ॥ आर्द्रादि पंचभं
पूर्भा रेवत्यादि चतुष्टयम् ॥ पूर्वाषाढा चतुः कंच चंद्र र्क्षाणि चतुर्दश ॥ ३८३ ॥ शेषा
णि रवि धिष्ण्यानि विज्ञेयानि मनीषिभिः ॥ सूर्ये चंद्र र्क्ष गे वृष्टि श्चंद्रे सूर्य र्क्ष गे स-
ति ॥ ३८४ ॥ पूर्फादि पंच के सूर्ये चंद्रे चंद्र र्क्ष गे ऽपि च ॥ उभौ चंद्र र्क्ष गौ स्यातां स्वल्पा
वृष्टि स्तदा भवेत् ॥ ३८५ ॥ तावे व यदि सूर्य र्क्षे तदा वृष्टि र्न जायते ॥ अथाढकप्रमाणम्
युग्मा २ ज १ गो २ मत्स्य १२ गते शशांके भानु र्यदा कर्कट के प्रयाति तदा शताढ
१०० हरि ५ कार्म्मुके ९ ऽर्द्धं ५० तुले ऽ७ घ कन्या ६ मृग १० योरशीतिः ८० ॥ ॥
कुलीर ४ कुंभालि ११।८ गते यदा स्यात्षड्विंशकाढं २६ भुवि वारिपातः ॥ ३८६ ॥ अर्द्धं
पर्वत भागेषु तदर्द्धं मारुते शतम् ॥ तदर्द्धं याति मेदिन्यां वाराहेण च भाषितम् ॥

शि शत योजनमुत्तुंगं सहस्रं विस्तृतं ततः ॥ आढकस्य प्रमाणेऽयं वाराहेण च भाषितम्
२ ॥ ३८८॥ अथ रविनक्षत्र वाहनम् ॥ दिनेशभात्सूर्य भवंहि घस्रं विगण्य सप्तोद्धृतमर्क
वाहनम् ॥ सवे तुरंगः शशकश्च शूकरः श्वानको गो महिषश्च दर्दुरः॥ ३८९ ॥
अथ वर्षाकाले सद्योवृष्टि लक्षणानि ॥ नभः काकांड भंगो इक्षु निभं तित्तिरसन्निभम् ॥ म्रो-
त्वोजला वा मेघास्स्युर्गिरि कज्जल सन्निभाः ॥ ३९०॥ जलजंतु समाकारा मूलाभ्रा
स्त्व गा अपि ॥ गिर्यो ऽजन संकाशा सद्यो वृष्टि विनर्तनम् ॥३९१॥ शुभ्रनेत्र
निभः क्षौद्र सन्निभः सलिलप्लुतः ॥ सन्निधौ परिवेषाढ्य श्चंद्र मा शीघ्र वृष्टिकृत् ॥
॥३९२॥ विकृतिर्लवणे वाला स्सेतु बंधोथ माऽप्यथि ॥ जले मीनोत्प्लवो रावो भेकानां
नीरसं जलम्॥ ३९३ ॥ व्यालानां मैथुनं वृक्षारोहः पशवस्तथा ॥ मक्षिकानल्पतां
याति सांद्रास्यास्सु पिपीलिकाः॥ ३९४॥ उत्स्रष्टाश्च गृहाद्वा वीनेच्छंति गमनं बहिः॥
खनंति भूतलं श्वानो मार्जाराश्चश्चवः खुरैः॥३९५॥ स्वैरायान्त्यं कुरा श्चोर्द्ध प्रर टारो

पे हर । नरो ॥ त्वणाग्रे वृश्चिका रोहो गवा मूर्द्धनि रीक्षणम् ॥ ३९६ ॥ पक्षिणां धूलिभिः
स्नानं प्रदोषे मेघ गर्ज्जनम् ॥ अपि दण्डा कलिर्मेघः शीतः प्राची भवो मरुत् ॥ ३९७॥
मत्य गिंद् धनुः संध्या रागो ऽथो मेघ गर्ज्जनम् ॥ आगुद्रक् सैव दिक्यातारक्ता सौ
दामिनी तथा ॥ ३९८ ॥ मध्ये नीत्रात पश्चान्हिनरा निद्रालवो भृशम् ॥ विज्ञेया ल-
क्षणे रेभि स्त घो वृष्टि र्घना गमे ॥ ३९९ ॥ नो माघे हिम वर्षणं न मरुत श्चंडा स्तथा फा-
ल्गुने चैत्रे वृष्टि विवर्ज्जितं तु गगनं मेघेन पूर्णो रविः ॥ वैशाखे न घनो पलस्य पत-
नं ज्येष्ठे न चण्डो रवि र्वृष्टि स्वल्प तरा सदैव कथिना वर्षासु नित्यं बुधैः ॥ ४०० ॥
इति वृष्टिकाण्डः ॥ अथोपश्रुति शकुनाः ॥ गणाधीशं प्रपूज्यादौ कार्य्यं तस्मै निवेदयेत् ॥
साक्षतं स फलं तोयं पात्र मादाय संव्रजेत् ॥ ४०१ ॥ उप श्रुते श्चवायाथ चाण्डालादि
गृहे वहिः ॥ निशि सुप्त जने तत्र स्थित्वा श्रुत्वा क्षतान् क्षिपेत् ॥ ४०२ ॥ अथोपश्रुति
मंत्राः ॥ ॐ उपश्रुति र्महालक्ष्मी श्चाण्डाल गृह वासिनी ॥ यन्मया चिंतितं कार्य्यं सत्यं २०१

वदसुरेश्वरि ॥ ४०३॥ ब्राह्मणानां शतं दत्वा कपिलानां शतत्रयम् ॥ तेन पापेन लिप्ता-
सि यदि सत्यं न भाषसे ॥ ४०४ ॥ पंचानां पांडुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ॥ ते-
न सत्येन धर्मेन सत्यं ब्रूहि नमोऽस्तु ते ॥ ४०५ ॥ भवत्या विदितं सर्वं सर्वकार्यं वि-
शेषतः ॥ इत्युक्त्वा शृणुयाद्वाणीं श्रद्धावाक्यत्रयान्विताम् ॥ ४०६ ॥ प्रास्थिप्य चञ्च-
लं तत्र समागच्छेत्स्वमालयम् ॥ तद्वाक्यस्यानुसारेण फलं ज्ञेयं यथार्थतः ॥ ४०७
॥ वारविशेषे नोपश्रुतिनिवासः ॥ चांडाली भवने सूर्ये चन्द्रे नापितमन्दिरे ॥ रजक्या
मन्दिरे भौमे बोधने वैश्यमन्दिरे ॥ ४०८ ॥ ब्राह्मणी मन्दिरे जीवे भार्गवे पण्ययो-
षितः ॥ दास्या ह्यारिणा नोयाया च्छोतुं चोपश्रुतिं शुभाम् ॥ ४०९ ॥ अथ रघुवंश-
दिशकुनाः ॥ रघुवंशस्य दुर्गायाः पाठस्य निगमस्य च ॥ पूजितं पुस्तकं पुष्पै रक्षि-
तैश्च फलादिभिः ॥ ४१० ॥ शनौ संस्थाप्य संपूज्य प्रातरेव विलोकयेत् ॥ कुमा-
र्युक्तप्रमाणेन निःकास्य श्लोकमुत्तमम् ॥ ४११ ॥ विज्ञेया शकुनास्तस्माद्यथार्थं

अ॰चि॰ वचनाद्धिते ॥ अविसर्गान्त पूर्वार्द्ध स्तवर्गे तरपंचमः॥ स्तुति लिङ्गर्जित श्श्लोक
२७४ श्शकुने च शुभावहः॥४१२॥ अथांगविद्या प्रश्नः ॥ शिरो मुखं कर्ण नेत्रं स्पृष्ट्वा पृच्छ
ति चेज्जनः ॥ सुवर्ण धन धान्यानां लाभ स्तस्य नसंशयः॥ ४१३ ॥ स्कंधग्रीवा कण्ठ
हस्त स्पर्शे लाभो हि दुःखतः ॥ कुक्षिनाभिसमालंभे भक्ष्य पानादि सिध्यति ॥
॥ ४१४ ॥ जंघा लिंग कटि स्पर्शे कन्या लाभ स्सुतोद्भवः ॥ जानु गुल्फ पद स्पर्शे महान्
क्लेशः प्रजायते॥ ४१५॥ केश स्पर्शे भवेन्मृत्युः फलादि स्पर्शने शुभम् ॥ तृणांगार
क संस्पर्शे कार्य्यसिद्धिर्न्न जायते॥ ४१६ ॥ काष्ठपंकपटस्पर्शे ग्रह पीडा मनो भयम्
॥ मृगा रामान्न भांडादि स्पर्शे सिद्धिः प्रजायते॥ ४१७॥ शून्यालये स्मशाने वाशु
ष्क काष्ठे क्षते नरो ॥ गुल्म वस्त्राधम स्थाने त्वस्ते क्लेशः प्रजायते॥ ४१८॥ देवगेहे
नदी तीरे दिव्य स्थाने शुभं वदेत् ॥ शुभदिक्षु स्थिते सिद्धिर्विदिक्षु न प्रजायते॥ ४१९ ॥
त्यंगविद्या॥ अथ सर्व प्रश्न निर्णयः ॥ प्रश्नाह काले फल नाम वर्णा न्नक्षत्र निघ्नान्तिथि वार २७४

ज्ञसैः ॥ योगेश्च युक्ता नव नीश २६ भक्तानुशे फलं प्राहुरथा तनूजः ॥ ४२६॥ एकावशे
षे द्रविणस्य धान्यराशेस्तथा स्यात्सदनस्य लाभः ॥ नेत्रावशेषे सुजनस्य संगो भ्रातु-
स्सुतस्यैव विनाशनं च ॥ ४२७॥ त्रिशेषके नेत्रशिरोदरेषु रोगोद्भवो वस्त्रविनाशनं च
॥ वेदावशेषे नृपदर्शनं स्यादश्वस्य लाभो नृपतेः सकाशात् ॥ ४२८ ॥ शरावशेषे
निजवस्तुहानिः प्रियावियोगस्सुतबंधुनाशः॥ रसावशेषे रथवाजिलाभो रिपोर्भयं
चौरभयं तथा स्यात् ॥ ४२९ ॥ स्वरावशेषे रिपुभिश्च युद्धे जयो भवेद्दासजनस्य ला:
भः ॥ वस्त्रस्य लाभः क्रयतश्च लाभो मातंगशेषे च कलत्रलाभः ॥ ४३०॥ नवावशेषे
मठसद्म लाभः स्वसद्महानिः पुरराजपूजा ॥ दशावशेषे नृपतेः सकाशाद्दण्डश्च वा-
च्यः स्वसुतस्य नाशः ॥ ४३१॥ भवावशेषे कृषितोऽन्नलाभो लाभः प्रियायाः पृथिवीशलाभः
॥ सूर्यावशेषे गजरोहणं स्याद्भृत्यस्य लाभस्तु विदेशगस्य ॥ ४३२ ॥ विश्वावशेषे बहु-
दूरदेशयानं तथा क्लेशयुतं च शस्तम् ॥ इंद्रावशेषे बहुराज्यपूज्यस्तथा धनाप्तिः स्वजनेन

संगः ॥४३३॥ पंचेत्तु शेषे त्वशनस्य लाभो धनस्य लाभश्च गृहस्य लाभः ॥ भूपा-
वशेषे वपनेन मैत्रं लाभस्तु तस्मात्स्वजने प्रतिष्ठा ॥ ४३४ ॥ पृच्छा तनूजस्य मतविशेषा
त्त्वपंचकैस्तस्य गदः प्रतिष्ठम् ॥ विचार्य्यवाच्यं गणकेन साधु वा साधु नूनं सुतरां च श-
स्वत् ॥ ४३५ ॥ अथनक्षत्रप्रश्नः ॥ मघादि अर्य्यमांतं च समीपे वस्तु दृश्यते ॥ हस्तादि-
वसु पर्य्यंत मन्य हस्तेच दृश्यते ॥ ४३६ ॥ मूलताराद्य मांतंतु स्वगृहे वस्तु दृश्यते ॥ भस्मा
दि श्रवर्ण्य पर्य्यन्त मदृष्टं दूरगं तथा ॥ ४३७ ॥ तिथिवारंच नक्षत्रं ग्रहेण समन्वितम् ॥ दिक्
संख्यया हतं चैव सप्तभिर्विभजेत्युनः ॥ ४३८ ॥ एकेन भूतले द्रव्यं द्वये चेडांड संस्थितम् ॥
तृतीये जल मध्यस्थ मन्तरिक्षे चतुर्थके ॥ ४३९ ॥ तुर्यस्थे पंचमे तत्स्यात् षष्टे गोमय
मध्यगम् ॥ सप्तमे भस्म मध्यस्थ मित्येतत्प्रश्नलक्षणम् ॥ ४४० ॥ अथगुणप्रश्नः ॥ ति-
थिग्रहरसयुक्तं तारका वार मिश्रितम् ॥ अग्निभिस्तु हरेद्भागं पोयं सत्वं रजस्तमः ॥ ४४१॥
फलं ॥ सिद्धिस्तात्कालिकी सत्वे रजसानुविलंबतः ॥ तमसा निःफलं कार्य्यं ज्ञातव्यं प्रश्न

कोविदैः ॥ ४४२ ॥ अथागंतुकप्रश्नः ॥ तिथि प्रहरसंयुक्ता तारका वारमिश्रिता ॥ सप्तभि
स्तु हरेद्भागं शेषं तु फलमादिशेत् ॥ ४४३ ॥ फलं ॥ एक शेषं तथा स्थाने द्वितीये प-
थि वर्त्तते ॥ तृतीये ऽर्द्धमार्गे तु चतुर्थे ग्राम नादिशेत् ॥ ४४४ ॥ पंचमे पुनरावृत्तिः
षष्ठे व्याधि युतं वदेत् ॥ शून्यं ज्ञेयं सप्तमे वै चैतत्प्रश्नस्य लक्षणम् ॥ ४४५ ॥ अथ
गर्भिणी प्रश्नः ॥ तिथि भयाम वधू शुभ साक्षरं मुनियुतं त्रिगुणं मुनि भाजितम् ॥ स-
कल शास्त्र विचार विचक्षणैर्विषम पुत्र समे खलु कन्यका ॥ ४४६ ॥ गृहनष्ट पशुल-
भप्रश्नः ॥ युगमिता आश्व भेषु वने स्थितं तदनु षट् सुच कर्ण पथे स्थितम् ॥ अचल-
७ भेषु गतं गृहमागतं त्वथ गतं गत मेव मृतं त्रिषु ॥ ४४७ ॥ अथ सामुद्रिक परीक्षा ॥ त्रि-
शाल भाल वक्षाक्षि वक्षो बाहु करांघ्रिकम् ॥ सुहृत्व मस्तकं नाभि गंभीरा नाशिको-
न्नता ॥ ४४८ ॥ स्निग्धदंतत्वक्केशाः श्यामाः स्निग्धाश्च कुंचिताः ॥ नेत्रप्रांतेऽरुणं-
स्निग्धं विशालं कृष्णतारकम् ॥ ४४९ ॥ रक्ता वर्त्ताधपूरो वा सीगधगंभीरनिःस्वनः ॥ १०७

सफेरा मूत्रकी धन्यो नरो नोत्पल पार्श्विकः ॥ ४५०॥ नरो मात्र सुखो धन्यो नारी पितृ सुखीन
घा॥ रक्त मोष्ट मुखं पाणी पाद युग्म तलं तथा ॥ ४५१॥ औदार्य्य धैर्य्य गांभीर्य्य महारंभ
यशः श्रियः ॥ प्रसन्न वंदनो वंश्या भिमानी प्रिय सत्यवाक् ॥ ४५२॥ नीतिमान् गुरुवाक्य
स्थः शुचि दक्षो ऽथ पापभी॥ इत्यादि गुण सपन्नो नरो भवति भाग्य वान्॥ ४५३॥ रेखा
यात र्ज्जनी याता निर्य्यक्ता पुण्य संज्ञका॥ तर्ज्जन्यं गुष्ठयो र्म्मध्ये तिर्य्यक्ते श्वर्य्य संज्ञका
॥ ४५४॥ मणिवं धत ऐश्वर्य्य रेखा मूलं हि याति या॥ सा रेखा पितृवंशाख्या व्युच्छिन्ना गेह
सौख्यदा॥ ४५५॥ समा योग वती चैया पितृ वंश वि वर्द्धिनी॥ आयुः कनिष्ठयो र्म्मध्ये एवा
कांत कला क्रिया॥ ४५६॥ करभान्ते गता रेखा सा तु मातुल वर्गिका॥ सूक्ष्मा भाव्य वसुः स्थू
ला मातुलस्यैव मन्यतः॥ अंगुष्ठ मूल रेखाभि र्विज्ञेया सन्तति र्बुधैः॥ सूक्ष्माभिः कन्यका पु
त्र स्थूलाभिश्च तथाविधा॥ ४५७॥ अच्छिन्नाभि न्न रेखाभिस्सन्तति र्दीर्घ जीविनी॥ रेखाया
नासिका मूलं यशः पुण्याणि धातु सा॥ ४५८॥ धन रेखा तु सा याता मणि बंधात्तु मध्य-

ना ॥ स्याच्चेद्रखंडिता पूर्णा सोर्द्धरेखा तु राज्यदा ॥ ४५९ ॥ गंभीरास्तु दृढाः स्निग्धाः सु-
भद्रा मनु पिंगलाः ॥ दक्षिणे तु करे पुंसां वामा स्त्रीणां तु वामके ॥ ४६० ॥ अंगुष्ठस्तज-
वो यस्य स भवेद्राज्य भाग्नरः ॥ श्रीवत्साम्बरयादर्शध्वजस्तंभ गिरिस्रजः ॥ ४६१ ॥
हस्तिच्छत्रांबुजः कुंभः श्रीहस्तः कुलिशांकुशम् ॥ अंगारो व्यजनं वीणा जवो मत्स्या-
दिकं तथा ॥ ४६२ ॥ करपादतले यस्य स भवेद्धरणीपतिः ॥ खल्वाटस्तु धनी विद्वान् वृं-
तुरस्सं हृतांगुलिः ॥ ४६३ ॥ धनाढ्यो ल्पवयः प्रोक्त उदारो विरलांगुलिः ॥ तिलः पाद-
तले हस्ते नाशयां हृदि गोचरः ॥ ४६४ ॥ हृदि भजन ने भाले धन भाग्य प्रदो नृणां स्मृ ॥
रेखाः करतले चेत्स्यु रुक्ताभ्यस्त्वधिकास्तथा ॥ ४६५ ॥ ह्रस्वासूक्ष्माः सिताः छिन्नाल द्रा रुक्ष-
श्च दरिद्रता ॥ स्थूलं भजनं नदीर्घ केशं वा नेकधारकम् ॥ ४६६ ॥ यस्य चेत्स दरिद्रः स्या-
त् शुभलक्षणवानपि ॥ दरिद्रः कर युग्मेन कंडूयति शिरस्तुयः ॥ ४६७ ॥ अथ स्त्रीणां-
विशेषः ॥ शुभानि यानि चिन्हानि पुंसां प्रोक्तानि सूरिभिः ॥ तान्येव योषितां योऽत्र विशेषः सो-

४०८ च्छति पुसः ॥ ४६८ ॥ लंबब्रू विकटं भालं विशालं प्रोन्नतं तथा ॥ यादंगुलि हस्वं चांत्यं ग-
गृ र्भे न स्पृशेद्भुवम् ॥ ४६९ ॥ यस्याःसा विधवा नारी सद्धाराःसा विलासिधा ॥ दीर्घस्फिक्
श्रांति भर्तारं दीर्घभाला तु देवरम् ॥ ४७० ॥ तुच्छादीर्घोदरी नारी श्वसुरं हंति निश्चितम् ।
लम्ब गुह्या तथा मुष्का नितं वा पति घातिनी ॥ ४७१ ॥ ज्ञालं दीर्घ गला हंति निःस्वा निम्न-
स्न नाशिका ॥ दुःखनाशा भवेच्चंडी दुःखिता कमठोदरी ॥ ४७२ ॥ हसिते गर्तगंडा या-
दुःशीला सा प्रकीर्तिता ॥ मिलद्भ्रू युगलावर्तकेशा भालाल्प नाशिका ॥ ४७३ ॥ दीर्घ
रोमान्विता या वालं वोष्ठी विकरालिका ॥ इत्यादेर शुभे चिन्हे र्युक्तां नारीं परित्यजेत् ॥
॥ ४७४ ॥ अथ स्त्रीणां शुभचिन्हानि ॥ विशाल लोचना तन्वी श्यामा मधुर भाषिणी ॥ स्थूल
लंब कचा गौरी श्लक्ष्ण गात्रा मनोहरा ॥ ४७५ ॥ हंसे भगमना म्रद्वी चंद्र वक्त्रा नितंबिनी ॥
सुचरित्राल्प हारा च गूढगुल्फा कृशोदरी ॥ ४७६ ॥ लघु हस्तांघ्रिका वं वुधी वा वृत्तोन्नत
स्तनी ॥ इत्यादि लक्षणोपेता सुभगा पुत्रिणी तु सा ॥ ४७७ ॥ अथ सामान्यत शुभलक्षणानि २०

ज्यो॰ ग्रर्च्छित वचनं चेत स्यो न्नतं सुभगं वपुः ॥ पापभीरुमति श्चेत्स्त्रिं चिन्हे रन्यैश्च योषिताम्
१९८ ॥ ४७८ ॥ ग्रथापरचिन्हानिस्त्रीपुंसोरशुभानि ॥ हस्तछेदी भिगाणां सुविन स्व लिखनं पादयो
रत्य पूजा ॥ दंता ना सल्यशौन्च्यंव सन मलिनता रुक्षता मूर्द्धजाना म्प्राह्रे सन्ध्ये चापि नि
द्रा वि वसन शयनं ग्रा सहासावलोकं स्वांगे पीठे च वा द्यं विल रति हर ते के श्राव स्या पि
लक्ष्मीम् ॥ ४७९ ॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाप्तयं त्रयो विं
शाति का सभा ॥ ४८० ॥ इति श्री संग्रह शिरो मणौ मिश्र कथनं नाम त्रयो विं
शतिः सभा २३ ग्रथतिथ्यो विष्युक्त कर्म्मानुष्टानफल सिद्ध्यर्थे तदंगत या निर्णीयते ॥ ग्रत्यंता
प्राप्त प्रापणं विधिः ॥ तदुक्तं मीमांसायां ॥ विधिरत्यं तम प्राप्तो नियमं पाक्षि के सति ॥ तत्र
चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥ १ ॥ सच विधिर्वेद वाक्यं स्मृति पुराणादि वाक्यं
च ॥ वेद वाक्य प्रामाण्यं सिद्धमेव ॥ तन्मूल त्वा त्स्मृति पुराणा दीना मपि प्रामाण्यम् ॥
२ ॥ तत्रगर्गः ॥ सविधि र्द्विविधः प्रवर्त्त को निवर्त्त कश्च ॥ प्रवर्त्तकस्तु ॥ दर्शे स्नात्वा पितृ- २९९

भ्यो योऽद्यात्कल तिलोदकं ॥ अन्नंच विधिवद्द्यात्संतति स्तेन वर्द्धते ॥ ३ ॥ निवर्त-
 कस्तु ॥ आमायांच नगच्छेत प्राप्त कालमपि स्त्रियम् ॥ अमावास्यायां नाधीयीत नाध्य-
पयेदिति ॥ ४ ॥ तिथिनक्षत्र वारादि साधनं पुण्य पापयोः ॥ प्रधान गुण भावेन स्व-
स्वा तंत्रेण ते स्समाः ॥ ५ ॥ अत स्तु तिथयो विध्यं गत्वेन निर्णेत व्याः ॥ तत्र कास्तिथ-
यः ॥ प्रति पदाद्याः षोडश एव तत्रा होरात्रेण सूर्य्य मंडला च्चंद्रस्य प्रथम कलानि-
र्गमे शुल्क प्रति पद्भवति ॥ एवं द्वितीया हो रात्रेण द्वितीया कला निर्गमे द्वितीया भव-
ति ॥ एवं तृतीया दयो द्रष्टव्याः ॥ एवं पंच दशे ना हो रात्रेण पंच दश्याः कलायाः
निर्गमे सूर्य्या च्चन्द्रमसो रत्यंत दूरात्पूर्णिमा ॥ एवं अस्यां पूर्णिमायां संपूर्ण मंडलस्ये
न्दोः षोडशे ना होरात्रेण एक कलाया रवि मंडल प्रवेशे कृष्ण प्रति पत् भवति ॥
एवं क्रमेण द्वितीयाद्याः ॥ एवं त्रिंशत्तमे ना हो रात्रेण पंच दश्याः कलायाः प्रवेशा
त्सूर्य्या चंद्रमसोरत्यंत सन्नि कर्षादमावास्या भवति ॥ नन्वेवंति थीनां विध्यं गत्वे- 

३ ति न विधिनैव सिद्धत्वात् तन्निर्णयस्याप्रयोजनम् ॥ सत्यं ॥ षष्टिघटिकात्मकत्वात्तद्वि-
१९३ न्नानां तिथीनां संपूर्णत्वेनानिर्णयत्वेऽपि यत्र तिथेर्वृद्धिह्रासौ भवतस्तत्रैकस्यास्तिथे-
र्दिनद्वयव्यापित्वेन तत्तिथौ विहितं कर्म कुत्र कर्तव्यमिति संशये ॥ अवश्यं निर्णयः
कर्तव्यः ॥ सा तिथिस्त्रिधा ॥ खर्वो दर्पः हिंसा चेति खर्वः समास्तिथिः दर्पः वृद्धिः हिंसा-
क्षयः ॥ यदाह बौधायनः ॥ खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणं ॥ खर्वदर्पौ परौ
पूज्यौ हिंसा स्यात्पूर्वकालिकी ॥ तत्र तिथीनां वेधनिर्णयमाह ॥ सर्वास्तिथयः पक्षद्वयेऽ-
पि सामान्येन पूर्वया परया च तिथ्या त्रिभिर्मुहूर्तैर्विद्धास्स्युः ॥ यदाह पैठीनसिः ॥ पक्ष-
द्वयेऽपि तिथयः तिथिं पूर्वां तथोत्तराम् ॥ त्रिभिर्मुहूर्तैर्विध्यंति सामान्योऽयं वि-
धिः स्मृतः ॥ न त्वयं वेधतिथिस्सामान्यविषये न भवति ॥ तथा च स्कांदे ॥ नागो द्वाद-
श नाडीभिर्दिक्पंच दशभिस्तथा ॥ भूतोऽष्टादश नाडीभिर्दूषयत्युत्तरां तिथिम् ॥
सत्यम् ॥ अयं विशेषवेधउत्तरतिथिविषयः ॥ सामान्यवेधस्तु त्रिमुहूर्त एव पूर्वेति- १६२

ध्यि विषयः ॥ तदुक्तंकौर्म्मे ॥ चतुर्दशी पंचमी च तथा च दशमी तिथिः पूर्वान्तिथिं दू-
जयंति त्रिभिरेव मुहूर्त्तकैः ॥ अयं च त्रिमुहूर्त्तादि वेध उदया दूर्द्धं पूर्वतिथ्या अस्त
मयात्प्राक् परतिथ्या चेत्यव गम्यते ॥ कुतः वचन बलादेव ॥ देवलः ॥ उदय न्नेव स-
वितायां तिथिं प्रति पद्यते ॥ सा तिथि स्सकला ज्ञेया दाना ध्ययन कर्म्मसु ॥ साति
थि स्तदहो रात्रं यत्रास्तं याति भास्करः ॥ उदिते दैवतं भानौ पैत्र्यं चास्तं गते रवौ ॥
त्रिमुहूर्त्तमहो यासा तिथि र्हव्य कव्ययोः ॥ अतः उदयात्त्रिमुहूर्त्त व्यापिन्यां दैवतं
कर्म ॥ अस्तमया त्रिमुहूर्त्त व्यापिन्यां पित्र्य कर्म्मका र्य्यम् एकभक्त व्रतादिषु भिन्नो वेध
स्य विचारः ॥ एकादशी व्रतादिषु च तिथ्यो ऽ वश्यं ह्रास्य वृद्धापि निर्णेयाः ॥ अथ तिथी
नां घटिका त्वव त्वात् घटी निर्णीयते ॥ सूर्य्यसिद्धांते ॥ षड्भिः प्राणै र्विनाडी स्यात् तत्य प्राणा भाग
उच्यते ॥ अस्यार्थः ॥ दश गुर्व क्षरोच्चारण कालः प्राणः ॥ कं कं कं कं कं कं कं कं कं कं
इति ॥ षिनाडी कला तस्याः साधकः ॥ श्लोको यथा ॥ लोक क्षेमाया सीन्मतस्य :कू-

म्मः कालः पुंसि ह्रीं ह्रस्वा कारो रामो रामः   हंसो बौद्धः कल्कीचेत् ॥ एवं नाना कारं
नाना रूपं नानानामानं योगि ध्येयं देवानां देवं वंदे तं गोविंदम् ॥ षष्टि कलाभि
र्भागो घटी   अन्योऽपिप्रकारः ग्रंथान्तरे ॥ ताम्रस्य षड्भिः पलै र्भाजनम् ॥ त्रिंशदंगुल
विस्तारमुच्छ्रितं चतुरंगुलम् ॥ स्वर्ण माषेन कृत्वा च चतुरंगुल कंटिकां ॥ मध्यभागे
तथाविद्धं घटिका तु प्रजायते ॥ तद्भेराणां भसा पात्रं या वत्कालेन पूर्यते ॥ सकालोघ-
टिका यास्तु पूर्वाचार्यै रुदाहृतः ॥ एकभक्तादि व्रतं गत्वा देक भक्तादि व्रतानां स्व-
रूपं कालश्च निरूप्यते ॥ तत्रतानि ॥ व्रतान्येक भक्त नक्ता या चितो पवास भेदेन चतु-
र्द्धाभवंति ॥ तत्रैक भक्तं नाम दिनार्द्ध रूपं मध्यान्हा दुपरि नियमेन भोजनम् ॥ दि-
नार्द्ध समयेऽतीते भुज्यते नियमे नयत् ॥ एकभक्त मिति प्रोक्तं मत स्तस्या द्दिवे व-
हि ॥ तच्चैक भक्तस्तु मध्यान्ह व्यापिन्यामेव ॥ तदाह बोधायनः ॥ उदयेतु यदा तस्व-
ड् नक्तस्या स्तमये तिथिः ॥ मध्यान्ह व्यापिनी ग्राह्या एकभक्त व्रतेति थिरिति ॥

कालोऽत्र पंचविधः ॥ प्रातः संगव मध्यान्ह पराण्ह सायान्ह भेदात् ॥ यदाह व्यासः ॥ मुहू-
र्त्तं त्रितयं प्रात स्तावानेवतु संगवः ॥ मध्यान्ह स्त्रि मुहूर्त्तस्या द पराण्ह श्चतादृशः ॥
सायान्ह स्त्रि मुहूर्त्तश्च सर्वकर्म्मसु गर्हितः ॥ एवंत्रयो दशी घटिका मारभ्याष्टाद-
शी घटिका यावत्तु षट् घटिकाधिको मध्यान्हः ॥ तत्राप्युत्तर स्त्रिसृ घटिकास्वये-
कभक्तं कर्त्तव्यं ततः सूर्य्यास्तपर्य्यन्तं गौणः॥ तत्र पूर्वेद्युर्व्याप्ति परेद्युर्व्याप्ति स्तदुभयोरंशेन व्या-
प्ति स्तत्रापि साम्यं वै षम्य मिति षट् पक्षाः ॥ तत्राद्ययोर संदेह एव ॥ तृतीये तु पूर्वेन्हि
गौण मुख्य व्याप्तेः सत्वात् पूर्वेति ॥ माधवः ॥ युग्म वाक्यान्निर्णयः ॥ इति हेमाद्रिः ॥ च-
तुर्थ पक्षे परे वसंकल्प काले सत्वादिति कोचित् ॥ गौण काल व्याप्तेश्चतुर्थ पक्षे स-
त्वात् ॥ वैषम्येणांश व्याप्तौ याधिका साग्राह्या साम्ये पूर्वा ॥ अयंचस्वतंत्रैकभक्त निर्णयः
॥ अन्यांगे उप वास प्रति निधौ तदनुसारेण निर्णयः ॥ तथाचोक्तं ॥ कर्म्मणो यस्य यः
कालः तत्काल व्यापिनी तिथिः ॥ तदा कर्म्माणि कुर्वीत ह्रास वृद्धी न कारणम् ॥ अप-

स्त्व ॥ योयस्य विहितः कालः कर्म्मणस्तदु पक्रमे ॥ विद्यमानो भवेदंगो नोज्झितः प्रक्रमस्तु ॥ इत्येकभक्तनिर्णयः ॥ अथ नक्तं तिथिनिर्णयः ॥ नक्तं नाम दिवा भोजनं वर्ज्जयित्वा रात्रौ भोक्तव्य मिति ॥ दिवा रात्रि व्यापिन्या मेव तिथौ कार्य्यं कोऽर्थः प्रदोष व्यापिन्या मेव ॥ तथाचस्कान्दे ॥ दिवा रात्रि व्रतं यच्च एक मेव तिथौ स्मृतम् ॥ ताभ्या मुभय व्यापिन्यां कुर्य्या देवं व्रतं व्रती ॥ रात्र्यो भय व्यापिन्या मेव ॥ तथाच कौर्म्मे ॥ प्रदोष व्यापिनी यत्र त्रि मुहूर्त्ता यदा भवेत् ॥ तदा नक्तं व्रतं कुर्य्या त्स्वाध्याय स्य निषेधवत् ॥ वत्सोक्तिरपि ॥ प्रदोष व्यापिनी ग्राह्या तिथि र्न्नक्त व्रते सदा ॥ प्रदोषस्तु ॥ उदया त्प्राकृतनी संध्या घटिका त्रय मिष्यते ॥ सायं संध्या त्रिघटिका अस्ता दुपरि भास्वतः ॥ त्रिमुहूर्त्तं प्रदोष स्स्या द्भाना वस्तं गते सति ॥ नक्तं तत्र तु कर्त्तव्य मिति शास्त्रस्य निश्चयः ॥ इतिमदनरत्ने व्यासोक्तिः ॥ ननु षड् घटिकात्मके प्रदोषे आद्यं घटीत्रयं संध्या कालः ॥ तदतिक्रम्य उत्तरस्मिन् घटिका त्रये नक्त व्रत निमित्तं भोजनं प्राप्त मिति ॥ तस्मिन्का-

अभि० ले भोजनाभावा इति निषिद्धम् ॥ तथाच स्मृतावपि ॥ चत्वारी मानि कर्म्माणि संध्यायां
३८८ परिवर्ज्जयेत् ॥ आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् ॥ संध्या काले भोजन
निषेधे नैव त्रिघटिकात्मक संध्या ग्रहणे संध्या नाम दिन रात्र्योः संधौ उपास्त्यादि
क्रियैव ग्रेह्या ॥ संधिश्च खंड मार्त्तण्डो पलक्षितः काल स्तस्याल्प त्वात्क्रिया या-
श्च वितत्वेन स्वल्प काले कर्त्तु मशक्य त्वात् ॥ मुख्यार्थ बाधे सति संध्या शब्देन सं-
धि शब्दः ॥ पूर्वा परो वा क्रिया पर्य्याप्तिः कालो लक्ष्यते ॥ यतः स्मृतौ ॥ प्रात स्संध्यास
नक्षत्रा मध्यान्हे मध्य भास्करा ॥ ससूर्य्या पश्चिमा संध्या संध्यात्रय मितीरिता ॥ अ
तो मुख्य काले संध्या वंदन देवान्न कृतं तत्र गौण काले घटी त्रयात्मके कर्त्तव्यता-
मभ्यनुज्ञा पनार्थं संध्या गर्ज्जितादिना विहिता नध्ययनादि परश्च नक्त व्रत विहि
त भोजनं नक्षत्र दर्शने एव कर्त्तव्यम् ॥ तथाच भविष्ये ॥ मुहूर्त्तोनं दिनं नक्तं प्रवदन्ति
मनीषिणः ॥ नक्षत्र दर्शनान्नक्त महं मन्ये गणाधिप ॥ नक्षत्र दर्शनादिति स्वप ३८८

संग्रि लोपे पंचमी ॥ अतश्च नक्षत्र दर्शनं प्राप्य नक्तं विहित भोजनं विधेय मित्यर्थः ॥ मुहू-
३८८ र्त्तोनं दिनं तु यति परम् ॥ यदाह देवलः ॥ नक्षत्र दर्शनान्नक्तं गृह स्थानां स्मृतं बुधैः ॥
यते र्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते ॥ सौरनक्त विषयेतु ॥ आत्मनो द्विगुणां छा-
यां यदा संतिष्ठते रविः ॥ सौरं नक्तं विजानीयान्न नक्तं निशि भोजनम् ॥ इतिन्नृसिं-
ह पुराणे अत सुमंतूक्तिरपि ॥ त्रि मुहूर्त्त स्पृगे वाह्नि निशि चैता वती तिथिः ॥ तस्यां सौ-
रं भवेन्नक्त मह न्येव तु भोजनम् ॥ तथाच स्कांदे ॥ नक्तं निशायां कुर्वीत गृहस्थो वि-
धि संयुतः ॥ यतिश्च विधवा चैव कुर्य्यात् तत्स दिवाकर मिति ॥ पुत्रवांस्तु रात्रावे-
व ॥ हरिनक्ते विशेषः ॥ कालादर्शे स्कांदे ॥ उदयस्था सदा पूज्या हरि नक्त व्रते तिथिः ॥ अ-
न्य नक्तं तु संक्रांत्या दौ रात्रावेव ॥ निषेधस्य रात्रि प्राप्त भोजन गोचरत्वेन बाध कत्वा-
त् ॥ दिन द्वय व्याप्तौ परा ॥ उभयोर्व्याप्ति दिवा तिथ्योः प्रदोष व्यापिनी तिथिः ॥ तत्रोत्तरं तु
नक्तं स्यादुभयत्रापि सायतः ॥ इति कालादर्शे जाबालि वाक्यम् ॥ अन्य पक्षेतु एकभक्त वन्निर्ण- ३८८

कः ॥ अन्य विशेषो मदनरत्ने गारुडे ॥ हविष्य भोजनं स्नानं सत्यमाहार लाघवम् ॥ अग्नि का-
र्य्यं मधः शय्या नक्तभोजी षडाचरेत् ॥ अग्नि कार्य्यं व्याहृति होमः ॥ इति नक्त तिथि
निर्णयः ॥ प्रसंगान्नक्षत्रव्रत कालः ॥ तत्र सूर्य्यास्तमय व्यापिनि नक्षत्रे नक्षत्रव्रतं कार्य्यम् ॥
अथवा त्यंत क्षय गामि नक्षत्रं दिन द्वये प्यस्तकाल व्यापिन भवति ॥ तदर्द्धरात्राद्
र्वाक् चन्द्र युतेन तत्रैव कार्य्यम् ॥ तदुक्तं विष्णुधर्मे ॥ उपोषितव्यं नक्षत्रं यस्मिन्नस्त-
मियाद्रविः ॥ युज्यते यत्र तातानि शीथे शशिना सह ॥ माधवीये स्कांदेच ॥ तत्रैवोप-
पसे हस्ते यन्निशीथा दधो भवेत् ॥ उपवासे य हस्तं स्यात् तद्दिने नैकभक्तयोः ॥ इतिन-
क्षत्रव्रतनिर्णयः ॥ अथायाचितव्रतनिर्णयः ॥ न विद्यते याचितं यस्मिन्नभ्यवहरणे तद-
याचितम् ॥ अभ्यवहरणश्च ॥ भक्ष्य भोज्य लेह्य पेय चोष्य भेदेन पंचविधः ॥ तत्र ॥ दं-
तैरेव खंडयित्वा यन्निगीर्य्यते तद्भक्ष्यम् ॥ यद्दंतखंडव्यातिरेकेण मुखव्यापारेणनि-
गीर्य्यते तद्भोज्यम् ॥ लेह्यन्त्वासजिह्वया गृहीत्वा यदंतर्गिल्यते

भनि दि ॥ चोष्यं नाम द्रव्यां तर्गत सारं ॥ दंतेन मुख व्यापारेण वा गृहीत्वा यादृल्यते ग्रसा-
२६१ रमन्यत्यज्यते ॥ यथा म्रफले क्षुदंडादिः ॥ अस्यच सामान्यत एक भक्त रूपत्वात् ॥
एकभक्त वदेव मध्यान्ह व्यापिन्या मेव तिथौ सति संभवे विधेयं ॥ परप्रार्थनया दिने-
भोजनासंभवे सति ॥ रात्रौ वा परप्रार्थनया भोक्तव्यम् ॥ अन्यथा ॥ ओक्षेह मेवेलिसं (?)
कल्प भंगः स्यात् ॥ एतेषा मेकभक्तादि व्रतानां खंड तिथिं विहाया खंड तिथावेवोप-
क्रम समाप्ती कुर्य्यात् ॥ या तिथीरुद्यारभ्य दिनार्द्ध व्यापिनी भवेत् ॥ साखंड तिथिः ॥
तस्यां व्रतानां प्रारंभ समाप्तिं च न कुर्य्यात् ॥ यदाह वत्स (?) ॥ उदय स्थर विर्व्या-
हि न भवे द्दिनमध्य गा ॥ ताखंडान व्रतानां सा तत्रारंभे समाप न मिति ॥ अथ व्रत परिभा-
षा व्रताधिकारिणो मदन रत्ने भविष्ये ॥ अनघाय स्तुये विप्रा स्तेषां श्रेयो विधीयते ॥ व्रतोप
वास नियमे न्नीनार्या नैस्तथा नृप ॥ उपवासंतु जानीहि ब्राह्मण परन् ॥ अत एव देवलः ॥
आहिताग्निरनड्वांश्च ब्रह्मचारी तु तेत्रयः ॥ अश्नंत एव सिध्यन्ति नेषां सिद्धिरनश्न- २६१

३६१ तामू ॥ एका स्थ्यायवपितुश्चाद्धाच्छूद्रस्याप्यधिकारः ॥ यथा ॥ शूद्रो वर्णश्चतुर्थोऽपि-
१६४ वर्णत्वाद्धर्म्ममर्हति ॥ वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विनेति ॥ व्यासः॥प्राच्यास्तु॥
वैश्य शूद्रयोर्हि रात्र्यधिको पवास निषेधः ॥ यत्तु ॥ वैश्याः शूद्राश्च ये मोहादुपवासं
मकुर्वते ॥ त्रिरात्रं पंचरात्रं वा तेषां शुद्धिर्न्न विद्यते ॥ इति हेमाद्रिः एवं स्त्रीणामपितु स्कांदे
नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषणम् ॥ भर्तुश्शुश्रूषयैवैता लोकानिष्टान्
व्रजंतिहि ॥ अन्यत्रापि ॥ यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्य्याद्भर्त्ताभ्यर्च्चनं सत्क्रियां
च ॥ तस्यार्द्धं साफलंनान्यचिता नारी भुंक्ते भर्तृशुश्रूषयैव ॥ आदित्यपुराणे ॥ नारी
खल्वननुज्ञाता भर्त्रा वापि सुतेन वा ॥ विफलं तद्भवेत्तस्याः यत्करोत्यौर्द्धदेहिकम् ॥
और्द्धदेहिकं पारलौकिकं तत्र तु स्नुज्ञा विषयं ॥ अत्र विशेषो हरिवंशे ॥ स्नानं च काय्यं शि-
रसस्ततः फलमवाप्नुयात् ॥ स्नाता स्त्री प्रातरुत्थाय पतिं निद्रापये त्सती ॥ तथा च ॥
गृही त्वोदुंवरं पात्रं सकुंभं साक्षतं तथा ॥ गोशृंगं दक्षिणे सिंच्य प्रगृह्नीयाच्च तज्जलम् ॥ ३६२

औदुंबरताम्रमयं ॥ ततोभर्तुस्सती दद्यात्तत्तस्य प्रयतस्य च ॥ आत्मनं चाभिषेक्तु-
श्च ततश्शिष्टं सितज्जलम् ॥ उपवासेषु कर्त्तव्यमेतद्धि व्रतकेषु च ॥ सर्वव्रतेषु संकल्प
विधिश्च ॥ भारते ॥ गृहीत्वौदुंबरं पात्रं वारिपूर्णमुदङ्मुखः ॥ उपवासंतु गृह्णीयाद्यद्वा सं-
कल्पयेद्बुधः ॥ स्तलेनैवेत्यर्थः एवं यथाविहितकाले व्रतारंभः ॥ व्रतारंभेन्च विशेषो मत्स्य-
रत्ने ॥ सत्यव्रतदेवलौ ॥ अभुक्त्वा प्रातराहारं स्नात्वाचम्य समाहितः ॥ सूर्याय देवताभ्यश्च
निवेद्य व्रतमाचरेत् ॥ भविष्ये व्रतकर्तुर्नियमाः ॥ क्षमा सत्यं दया दानं शौचमिंद्रियनिग्रहः ॥
देवपूजाग्निहवनं संतोषस्तेयवर्ज्जनम् ॥ सर्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्मृतः
॥ अग्निहोमस्तु दैवत्यो व्याहृतिहोमो वा ॥ विष्णुधर्मेऽपि ॥ तज्जप्यजपनध्यानं तत्क-
थाश्रवणादिकम् ॥ तदर्चनं च तन्नामकीर्तनश्रवणादयः ॥ उपवासकृतामेते
गुणाः प्रोक्ता मनीषिभिः ॥ कौर्मे ॥ वहिर्ग्रामांत्यजान्सूतिं पतितं च रजस्वलाम् ॥
न स्पृशेन्नाभिभाषेत नेक्षेत व्रतवासरे ॥ पृथ्वीचंद्रोदयेऽग्निपुराणे ॥ स्नात्वा व्रतवता-

सं. ८१ सर्वव्रतेषु व्रतमूर्त्तयः ॥ पूज्याः सुवर्णमय्याद्या शक्त्या वै भूमिशायिना ॥ जपो होम
१८ श्च सामान्यं व्रतानां दानमेव च ॥ चतुर्विंशद्द्वादश वा पंच वा एक एव वा ॥ विप्राः पू-
ज्या यथा शक्त्या तेभ्यो दद्याच्च दक्षिणाम् ॥ अत्र विप्रा इति पुल्लिंगनिर्देशात्पुमांस ए-
व भोज्या न तु स्त्रियः ॥ व्रतमूर्त्तयो व्रतदेवताप्रतिमाः ॥ प्रतिमास्वरूपं मदनरत्ने ॥ अनुक्त-
द्रव्यतत्संख्या देवताप्रतिमा नृप ॥ सौवर्णी राजती ताम्री वृक्षजा मार्त्तिकी तथा ॥ चि-
त्रजा पिष्टलेखोत्था निजवित्तानुरूपतः ॥ आमाषात्पलपर्य्यंतं कर्त्तव्या शाठ्यवर्जि-
तैः ॥ तत्रैव शास्त्रे ॥ आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ॥ मंत्रस्य देवता याश्च प्रजा-
पतिरिति स्थितिः ॥ मंत्रानुक्तौ समस्तव्याहृतिरूपो मंत्रः ॥ प्रजापतिश्च देवतेति ॥ कल्प
तरुः ॥ अनुक्तसंख्याय त्रस्याच्छतमष्टोत्तरं भवेत् ॥ उपवासं द्विजः कृत्वा ब्राह्मणानां
च भोजनम् ॥ कुर्य्यात्तेनास्य सगुण उपवासो विधीयते ॥ व्रतोद्यापनानुक्तौ पृथ्वीचंद्रोदये नंदि
पुराणे ॥ कुर्य्यादुद्यापनं तस्य समाप्तौ यदुदीरितम् ॥ उद्यापनं विना यत्तु तद्व्रतं निःष्फलं-

भवेत् ॥ यदि चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् ॥ वित्तानुसारतो दद्यादनुक्तोद्या-
 पने व्रते ॥ गाश्चैव कांचनं देयाद्व्रतस्य परिपूर्तये ॥ अथोक्तो नारदीये ॥ सर्वेषामप्यला-
भे तु यथोक्तकरणं विना ॥ विप्रवाक्यं स्मृतं शुद्धं व्रतस्य परिपूर्तये ॥ तथा विप्र वचो
यस्तु गृह्णाति मनुजः शुभम् ॥ अदत्वा दक्षिणां पापः स याति नरकं ध्रुवम् ॥ भारते दोडए
नंदे देवीपुराणे ॥ व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ॥ परान्नभोजनाद्देवि यस्या
न्नं तस्य तत्फलम् ॥ आग्नेये ॥ नित्यस्नायी मिताहारो गुरुदेवद्विजार्चकः ॥ क्षार-
क्षौद्रं च लवणं मधु मांसानि वर्जयेत् ॥ क्षारास्तु तत्रैवोक्ताः ॥ तिलमुद्गादृते शिस्यं धा-
स्ये गोधूमकोद्रवौ ॥ धान्यकं देवधान्यं च शमीधान्यं तथैव च ॥ स्विन्नधान्यं तथा
पण्यं मूलं क्षारगणाः स्मृताः ॥ गोधूमान्नं तु तत्रैव प्रशस्तम् ॥ व्रीहिषष्टिक-
मुद्गाश्च कपालाः सतिलं पयः ॥ श्यामाकाः शालिनीवाराः गोधूमाद्या व्रते हिताः ॥
कूष्मांडालाबवृंताकपालंकीज्योत्स्निकाः त्यजेत् ॥ चरुभैक्ष्यं शक्तुकणाः शाकं दधि- ३८५

घृतं मधु ॥ श्यामाकाः शालिनीवारः पावकं मूलतंदुलम् ॥ हविष्यं व्रत नक्ता दावग्नि
कार्यादिके हितम् ॥ मधुमांसं विहायान्य द्धृते च हितमीरितम् ॥ शामी धान्यं माषादिः
पालंकी मध्य देशे पोई इति प्रसिद्धा ॥ ज्योत्स्निका को शातकी ॥ मिताक्षरायां गौतमः
चरुभै क्ष्य सक्तु कण यावक शाक पयो दधि ॥ घृत मूल फलोद कानि हवींष्युत्तरोत्तर प्र-
शस्तानि ॥ पयो दधि घृतं च गव्य मिति ॥ गृहीत व्रतत्यागे तु मदनरत्ने तु छाग लेपः ॥ पूर्वं व्रतं
गृहीत्वा यो ना चरेत्काम मोहितः ॥ जीवन् भवति चांडालो मृतः श्वा चाभिजायते
॥ प्रायश्चित्तं तु षष्ठी चंद्रोदये आग्नेये गारुडे ऽपि ॥ क्रोधात्प्रमादा ल्लोभा द्वा व्रत भंगो भवे
द्यदि ॥ दिन त्रयं न भुंजीत मुंडनं शिरसो ऽथवा ॥ यत्तु ॥ प्रायश्चित्तं ततः कृत्वा पुनरे
व व्रती भवेदिति वचनं ॥ अति क्रांतमपि व्रतं कार्य्य मेवेति ॥ शूलपाणिः ॥ तन्मध्ये तु
व्रत शेष सत्वे ज्ञेयम् ॥ एतच्च शक्त विषयं ॥ अशक्तौ तु कालहेमाद्रौ पुराणांतरे ॥ उ-
पवासा समर्थश्चेदेकं विप्रं तु भोजयेत् ॥ तावद्धनादि वा दद्याद्भक्तश्चेद्द्विगुणं तथा ॥

भुक्तःद्दत भोजनः ब्राह्मण भोजनं विनेति शेषः ॥ सहस्र सम्मितां देवीं जपेद्दा प्राणा
संयमान् ॥ कुर्य्याद्द्वादशसंख्या कान् यथा शक्त्यातु योनरः ॥ इति शुद्धि तत्वे मात्स्ये ॥ उप-
वासे व्य शक्तानां नक्त भोजन मिष्यते ॥ मदनरत्ने वायवीये ॥ द्रव्य सातो पवासस्य फलं-
माप्नोत्य संशयम् ॥ अपरार्के देवलः ॥ ब्रह्मचर्य्यं तथा शौचं सत्यमामिष वर्ज्जनं ॥ व्रते-
ष्वेतानि चत्वारि श्रेष्ठानीति विनिश्चयः ॥ मात्स्ये ॥ तस्मात्स्त्रुतो पवासेन स्नानमभ्यंगपू
र्वकम् ॥ वर्ज्जनीयं प्रयत्नेन व्रतघ्नंतत्परं नृप ॥ नियमस्तु तत्र चान्चेवरणीयाः ॥ अथ
स्त्रीव्रतेषु विशेषा उच्यंते ॥ तत्र हेमाद्रौ व्रतकांडे गारुडे ॥ गंधालंकार तांबूल पुष्प मालानु
लेपनम् ॥ उपवासेन दुष्यंति दंत धावन मञ्जनमिति ॥ इदं च सभर्तृ को पवास विषयम् ॥
मंजनं च सतां बूलं कुंकुमं रक्त वाससी ॥ धार्य्ये त्सोपवासापि सर्वे धव्य कारणतः ॥ वि-
धवायति मार्गेण कुमारी वाय दृस्स येति ॥ विष्णुधर्म्मेऽपि ॥ सर्वेषू पवासेषु मान्याक्ष-
सुवासिनी ॥ धार्य्ये इक्त वस्त्राणि कुसुमानि सितानि च ॥ विधवा शुक्ल वसन मेक मे-

२ वहि धारयेत् ॥ मनुरपि ॥ पुष्पालंकारवस्त्राणि गंधधूपानुलेपनम् ॥ उपवासेन दुष्यंती
२९६ त्यादि ॥ मदनरत्ने व्यासोऽपि ॥ दंतधावनपुष्पादि व्रतेष्यस्नानदुष्यति ॥ यद्यपीदं सर्वोप-
वास विषयं प्रतीयते ॥ तथापि शिष्टाचारानुमतात् ॥ सौभाग्याद्यर्थक्रियमाण नवरात्र
त्रिरात्राद्युपवासविषयमेव ॥ नत्वेकादश्यादि विषयम् ॥ असकृज्जलपानाच्च सकृत्तां
बूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥ इत्यपरार्केदेवलेन ॥ तत्र नि-
षेधात् ॥ न चास्य पुंविषये सावकाशत्वात् ॥ स्त्रीणां तांबूलादि रागप्राप्तत्वात् ॥ तांबूला
दि प्राप्तवास्यैवैकादशीतर विषयत्वेनवै परीत्यस्यापि सुवचत्वात् ॥ हरिवंशे ॥ अंजनं
रोचनां चैव गंधाः सुमनसस्तथा ॥ व्रते चैवोपवासे च नित्यमेव विसर्जयेत् ॥ शिरसोऽ
भ्यंजनं सौम्य नैव मेतत्प्रशस्यते ॥ न पादयोर्न गात्रस्य स्नेहेनेति स्थिति स्मृता ॥ तत्रैव ॥
अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा ॥ उपवासाद्धता ह्यपि सद्यो भ्रंशयति स्त्रियम् ॥
स्त्रियमित्युपलक्षणम् ॥ शिवधर्मे ॥ दानं व्रतानि नियमं स्नानं ध्यानं हुतं जपः ॥ यत्ने- २९८

नापि ज्ञातं सर्व कांधे तस्य वृथा भवेत् ॥ अथ सूतकादौ निर्णयः ॥ तत्र शूगावसूत्या शौच-यो: सर्वं स्मार्तकर्म्म निवृत्ति निवंधेषु स्थ षैव ॥ गोडास्तु सूता शौचाद पिता साधुः ॥ जानूर्द्ध क्षतजे जाते नित्य कर्म्म न चाचरेत् ॥ नैमित्तिकं च तद धर्म्म वङ्क्तो न चाच-रेत् ॥ सूतके च समुत्पन्ने ज्वर कर्म्मारिण मैथुने ॥ धूमोद्गारे तथा वांतौ नित्य कर्म्माणि सं-त्यजेत् ॥ द्रव्ये मुक्ते त्व जीर्णे च नेव भुक्त्वापि किंचन ॥ कर्म्म कुर्य्यान्नरो नित्यं सूतके मृत-के न चेति ॥ कालिका पुराणात् वस्तुतस्तु ॥ पूर्वं देवी पूज्योप क्रमांत न्नात्र विषयत्व मस्येति युक्तं प्रतीमः ॥ तथा हेमाद्रौ पाद्मे ॥ गर्भिणी सूतिका दिश्च कुमारी वाथ रोगिणी ॥ यदा ऽशु-द्धा तदा न्येन कारयेत्प्रयता स्वयमिति ॥ तेन यस्मिन्व्रते यत्पूजाद्युक्तं तदन्येन कारये-त् ॥ शरीर नियमान्स्वयं कुर्य्यात् ॥ शुद्धितत्वे विष्णुः ॥ वहु कालिक संकल्पो गृहीतश्च पुराय-दि ॥ सूतके मृतके चैव व्रतं तं नैव दुष्यति ॥ एतत्काम्य परम् ॥ नित्यं त्वनारब्धमिति कार्य्यमिति ॥ गौडाः ॥ मत्स्य रत्ने ॥ पूर्व संकल्पितं यच्च व्रतं सुनियत व्रतैः ॥ न त्कर्त्तव्यं नरैः 

वर्हि धारयेत् ॥ मनुरपि ॥ पुष्पालंकारवस्त्राणि गंधधूपानुलेपनम् ॥ उपवासेन दुष्यंती
त्यादि ॥ मदनरत्ने व्यासोऽपि ॥ दंतधावनपुष्पादि व्रते ष्य स्नानदुष्यति ॥ यद्यपीदं सर्वोप-
वासविषयं प्रतीयते ॥ तथापि शिष्टाचारानुमतात् ॥ सौभाग्यार्थं क्रियमाण नवरात्र
त्रिरात्राद्युपवासविषयमेव ॥ नत्वेकादश्यादिविषयम् ॥ असकृज्जलपानाच्च सकृत्तां
बूलभक्षणात् ॥ उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥ इत्यपरार्के देवलेन ॥ तत्र नि-
षेधात् । न चास्य पुंविषये सावकाशत्वात् ॥ स्त्रीणां तांबूलादि रागप्राप्तत्वात् ॥ तांबूला
दिन्यापकस्यैवैकादशीतरविषयत्वेन वै परीत्यस्यापि सुवचत्वात् ॥ हरिवंशे ॥ अंजनं
रोचनां चैव गंधाः सुमनसस्तथा ॥ व्रते चैवोपवासे च नित्यमेव विसर्जयेत् ॥ शिरसोऽ
भ्यंजनं सौम्यं नैवमेतत्प्रशस्यते ॥ न पादयोर्न गात्रस्य स्नेहेनेति स्थिति स्मृता ॥ तत्रैव ॥
अश्रुपातो रोषश्च कलहस्य कृतिस्तथा ॥ उपवासाद्धता ह्यपि सद्यो भ्रंशयति स्त्रियम् ॥
स्त्रियमित्युपलक्षणम् ॥ शिवधर्मे ॥ दानं व्रतानि नियमं स्नानं ध्यानं हुतं जपः ॥ यत्ने-

वेत् ॥ तत्रैव ॥ स्वयं कर्त्तुमशक्तश्च कारयेत पुरोधसा ॥ इदंच सर्व वर्ण साधारण मावे प्रोष
८०१ त् ॥ जपस्तपस्तीर्थ सेवा प्रव्रज्याजप साधनम् ॥ विप्रैस्संपादितं यस्य सपन्नं तस्य तत्फ
लम् ॥ अत्रविशेषमाह त्रिकांडमंडनः ॥ काम्ये प्रतिनिधिर्नास्ति नित्ये नैमित्तिके चसः ॥का
म्येऽप्युपक्रमादूर्द्धं केचित्प्रतिनिधिं विदुः ॥ नस्यात्प्रतिनिधिर्मंत्र स्वामि देवाग्नि
कर्म्मसु ॥ सदेव काल योन्नास्ति नारणे रग्निरेवसा ॥ नापि प्रतिनिधानव्यं निषिद्धं व
स्तु कुत्रचित् ॥ हिरण्यकेशिसूत्रेऽपि ॥ न स्वामित्वस्य भार्य्यायाः देशस्य कालस्याग्नेर्दे
वतायाः कर्म्मणः शब्दस्य च प्रतिनिधि र्विद्यत इति ॥ अथव्रतादि सन्निपातेनिर्णयः ॥ तत्र
तिथि द्वय सन्निपाते ॥ तत्रोक्तं दान होमादि क्रमेणानुष्ठेयमविरोधात् ॥ इदं पूर्वारब्धे
ष्वेव ॥ एक मध्येऽन्यकामः कर्म्मारंभस्तु न भवत्येवं गुणफला इते ॥ यत्तु व्रतादि क-
र्म्म मात्र स नंगेन व्यवधान दोषस्सर्वत्र साम्यतः ॥ शिष्टास्तु ॥ कार्त्तिकस्नानादिम ८०१
ध्ये लक्ष होम तुला भारत श्रवणादि माचरंति तन्नित्यमध्ये काम्यं मध्येतु नित्यमापन्नेके ८०२

शुद्धः स्नानार्च्चनविवर्ज्जितम् ॥ माधवीये कौर्म्मेऽपि ॥ काम्योपवासे प्रक्रांते त्वंतरा स्तूतसूत
४० के ॥ तत्र काम्य व्रतं कुर्य्यात्स्नानार्च्चनविवर्ज्जितमिति ॥ एतेन सांगेऽधिकारेण द्रव्यांगं देव
पूजादि कार्य्यमिति वर्द्धमानोक्तिः परास्ता ॥ प्रारब्ध पूजादि कार्य्यमेव तत्रैव विशेषं वक्ष्या
मः ॥ एवं रजस्वलापि ॥ यत्तु सत्यव्रतः ॥ प्रारब्ध दीर्घतपसां नारीणां यद्रजो भवेत् ॥ न तत्रापि
व्रतस्यस्यादुपरोधः कदाचन ॥ तत्प्रतिनिधिना कारयेत् ॥ तदुक्तं मदनरत्ने मात्स्ये ॥ अंत
रातु रजोयोगे पूजामन्येन कारयेत् ॥ प्रतिनिधयश्च निर्णयामृते ॥ पैठीनसिः ॥ भार्य्या पत्यु
र्व्रतं कुर्य्यात् भार्य्यायाश्च पतिर्व्रतम् ॥ असामर्थ्येऽपरस्ताभ्यां व्रतभंगो न जायते ॥
स्कांदेऽपि ॥ पुत्रं वा विनयोपेतं भगिनीं भ्रातरं तथा ॥ एषामभाव एवान्यं ब्राह्मणं वा नियो
जयेत् ॥ कात्यायनः ॥ पितृमातृभ्रातृपतिगुर्व्वर्थे च विशेषतः ॥ उपवासं प्रकुर्व्वाणाः पु
ण्यं शतगुणं भवेत् ॥ मदनरत्ने प्रभासखंडे ॥ भर्ता पुत्र पुरोधाश्च भ्राता पत्नी सखापि च
॥ यात्रायां धर्म्मकार्य्येषु जायते प्रतिहस्तकाः ॥ एभिः कृतं महादेव स्वयमेव कृतं भ- ४००

स॰सि॰ एवं द्वादश्यां मासोपवास श्राद्ध प्रदोषादिषु ज्ञेयम् ॥ एवं काम्यनैमित्तकानित्यत्वा॥ द दा न
५०३ वलावलं स्वयमूह्यमिति दिक् ॥ इति व्रतपरिभाषा    अथ व्रतोपवासादिषु तिथीनां साधारणनि-
र्णयः ॥ अथ शुक्लपक्षे द्वितीया तृतीया युक्ता तृतीया द्वितीया युक्ता ॥ चतुर्थी पंचम्या पंचमी च-
तुर्थ्या षष्ठ्या सप्तमी सप्तम्या षष्ठी    अष्टमीनवम्या नवम्यष्टम्या ॥ एकादशी द्वादश्या द्वा-
दश्येकादश्या ॥ चतुर्दश्या पौर्णमासी पौर्णमास्या चतुर्दशी ॥ अमावास्या प्रतिपदा प्रति प-
द मावास्ययेति ॥ तदुक्तं निगमे ॥ युग्माग्नि युगभूतानि षण्मुन्योर्वसु रंध्रयोः ॥ रुद्रेण द्वादशी
युक्ताचतुर्दश्या तु पूर्णिमा ॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् ॥ व्यस्तमेतन्
महादोषं प्रवदंति मनीषिणः ॥ इति ॥ युग्मं द्वितीया अग्निस्तृतीया युगं चतुर्थी भूतं पंचमी
षट् षष्ठी मुनिः सप्तमी वसु रष्टमी रंध्रं नवमी रुद्रैकादशी नन्वत्र वाक्येषु शुक्लपक्ष एव कथं
गृह्यते तदुच्यते ॥ चतुर्दश्या च पूर्णिमेति प्रतिपदमावास्ययेति ॥ उभयोः साहचर्याच्च
एतयोः कृष्णपक्षे असंभवात् ॥ दशम्येकादशी युता नवमी युता वा कार्या ॥ संपूर्णा दश- ४

भक्तादौ विरोधस्तत्र प्राथम्यादेकभक्तं कार्य्यं ॥ नक्तं तु परेद्युस्तत्तिथौ गौण काले कार्य्यम् ॥ समकाली न विरुद्ध व्रतादौ त्वेकम् स्वयं कृत्वान्यक्षार्य्यों दिना कारयेदिति माधवः ॥ यत्र तु शिवरात्र्यादौ तिथि मध्ये पारणायान्हि भोजनं प्राप्तं ॥ भूताष्टम्यो र्दिवा भुक्त्वा रात्रौ भुक्त्वा च पर्वणि ॥ एकादश्यां दिवारात्रौ भुक्त्वा चांद्रायणं चरेत् ॥ इति तन्निषेधश्च तत्र परत्वावेधत्वाद्दिवैव भोजनम् ॥ निषेधस्तु राग प्राप्त भोजन विषयः ॥ एवमष्टम्यादि नक्त व्रते संक्रांत्यादौ रवौ संकष्ट चतुर्थ्यां च रात्रौ भोजनम् ॥ यत्र त्वष्टम्यादौ तु दिवा भुजि निषेधः ॥ संक्रमेच रात्र्यामिति निषेध द्वयम् ॥ तत्रोपवास एव कार्य्यः ॥ यद्यपि पुत्रिणोऽपवासोऽपि निद्रः ॥ तथाप्युपवास निषेधेऽपि किंचिद्भक्ष्यं प्रकल्पयेत् ॥ इति वचनात् ॥ किंचिद्भक्षयित्वोपवासः कार्य्यः ॥ चांद्रायण मध्ये एकादश्यादौ तु भोजन मेव कार्य्यम् ॥ चांद्रायणस्य काम्य त्वेन नित्यवाधकत्वात् ॥ अवाधेन गत्यंतर संभवाच्च एकादश्या मेकान्तरोपवासादि पारणायां जल पारणं कृत्वोपवसेत् ॥ अपो वा अशित मनशितं चेति श्रुतेः 

श्रि षेधव्यवस्थामाह ॥ गर्गः ॥ विधिः पूज्य तिथौ तत्र निषेधः कालकेद्वति ॥ पूज्यत्वं च क
७ र्मानुष्ठानयोग्यत्वम् ॥ एवं च खंडतिथौ पूज्यत्वं निर्णेयं यदा तु अमावास्या द्वितीय-
या च प्रतिपदोर्य्योगस्तदा मासुत्तैव ग्राह्या ॥ तदुक्तं निगमे ॥ युग्माग्नियुगभूतानां षण्मु
न्योर्वसुरंध्रयोः ॥ रुद्रेण द्वादशी युक्ता चतुर्दश्या तु पूर्णिमा ॥ प्रतिपद्यप्यमावास्या
तिथ्योर्युग्मं महाफलम् ॥ अत्र पूर्वतिथिस्तु उत्तरविद्धैव उत्तरा तु पूर्वविद्धैव ॥ चैत्र
कृष्ण प्रतिपदि वसंतारंभः ॥ तत्र चैत्र कृष्ण प्रतिपदि पूर्वविद्धायां विभूति वंदनादि कर्म
कर्त्तव्यं ॥ होलिकानंतरत्वेनैव ॥ होलिका समीपं गत्वा तद्भस्म गृहीत्वा ॥ पठनीयोयं मं
त्र ॥ ॐ वंदितासि सुरेंद्रेण ब्रह्मणा शंकरेण च ॥ अतस्त्वां धारयिष्यामि विभूते भूतिदा
भव ॥ सचंदनमाम्रमुकुलं च प्राश्नीयात् ॥ गोमयोपलिप्ते शुचौ देशे कृतस्वस्त्य-
यनः ॥ प्राशनमंत्रः ॥ आम्रमग्र्यं वसंतस्य चाकंद कुसुमं तव ॥ सचंदनं पिबाम्यद्य सर्व
कामार्थसिद्धये ॥ चैत्रशुक्ल प्रतिपदि वत्सरारंभः ॥ सा चोदयव्यापिनी ॥ यथा चैत्रे मासि जग ४५५

सं॰ भि॰ अष्टा त्वं व्रतीजप्त्वा शतमष्टोत्तरं शुचिः ॥ अष्टाक्षरः ॥ ॐ नमो नारायणायेति ॥ पैठीनसिरपि ॥
४५४ तांबूलचर्वणे स्त्रीसंभोगे मांसनिषेवणे ॥ व्रतलोपेन चेत्कुर्य्यात्कृच्छ्रा वृद्धजि वर्ज्जनम् ॥
संभोगो ऋतुकालादन्यत्र ॥ व्यासः पारणे ॥ वर्ज्जयेत्पारणे मांसं व्रताहेप्यौषधं सदा ॥ एकाद-
श्यां श्राद्धमाज्ञो ॥ मातापित्रोः क्षये प्राप्ते भवेदेकादशी यदि ॥ अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पि-
तृसेवितमिति ॥ अन्यदपि ॥ शातातपः ॥ एकादश्यां व्रतं प्राप्य पितुः संवत्सरं भवेत् ॥ भार्य्या ऋतु-
मतीचैव कथं कार्य्यं भवन्तते ॥ तत्रैव ॥ श्राद्धं कृत्वा व्रतं कुर्य्यात् आघ्राणं पितृपिण्डयोः ॥ रात्रेश्चतु-
र्थ्यभागे तु ऋतुस्नानं प्रवर्त्तते ॥ एते नैकादशीनिमित्तं श्राद्धं ह्यासन्या वदतः परास्ताः ॥ निर्मूलत्वात्
भवतघ्नान्याह मदनरत्ने देवलः ॥ सर्वभूतभयं व्याधिः प्रमादो गुरुशासनम् ॥ अव्रतघ्नानि पठ्यन्ते
सकृदेतानि शास्त्रतः ॥ स्कान्देऽपि ॥ अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ॥ हविर्ब्राह्मणका-
म्या च गुरोर्वचनमौषधम् ॥ नारदीये ॥ अनुकल्पो नृणां प्रोक्तः क्षीणानां वरदर्शिनि ॥ मूलं फल-
पयस्तोयमुपभोग्यं भवेच्छुभे ॥ वायुपुराणेऽपि ॥ शयने च मदुत्थाने नत्याश्वं परिवर्त्तने ॥ नक्तो मू- ४५५

सं.धि लफला हारी हृदि शल्यंमम पर्यंयेत ॥ इदंचाति संकष्टं विधयम् ॥ एतेचाविरोधिनो निर्णयाः
४७६ सर्वव्रतेषु ज्ञेयाः ॥ तत्रैकादश्यां संकल्पः ॥ गृहीत्वौडुंबरं पात्रं इत्यादि ॥ मंत्रश्च ॥ एकादश्यां निरा
हारः स्थित्वा ह्यपरे ह्यनि ॥ भोक्ष्यामि पुंडरीकाक्ष शरणंमे भवाच्युत ॥ शैवादीनांतु हेमाद्रौ
कौर्म पुराणे ॥ सावित्र्याप्यथवा नाम्ना संकल्पंतु समाचरेत् ॥ शिवादिगायत्र्यो यजुर्वेदे प्र सि-
द्धाः ॥ वाराहे ॥ इत्युक्त्वार्घ्यंततो विद्वान्पुष्पांजलिमथार्चयेत् ॥ ततस्तज्जलं पिबेत् ॥ अष्टाक्ष
रेण मंत्रेण त्रिर्जप्तेनाभिमंत्रितम् ॥ उपवासफलप्रेप्सुः पिबेत्पात्रगतंजलम् ॥ मध्यरात्रेउ
रयेवा दशमी वेधे रात्रौ संकल्पः ॥ इतिमाधवः ॥ दशम्या संगदोषेण अर्द्धरात्रात्परेणतु ॥
वर्जनीयाश्चतुरो यामाः संकल्पार्चनयोस्तदा ॥ विद्धोपवासे ऽनश्नन्स्वबुद्धिस्थ ज्ञा समाहितः
रात्रौ संपूजयेद्विष्णुं संकल्पं च तदा चरेत् ॥ इतिनारदीये ॥ तत्रैव पूजामभिधाय ॥ देवस्य पुरतः
कुर्य्याज्जागरं नियतो व्रती ॥ द्वादश्यां निवेदन मंत्र उक्तः कात्यायनेन ॥ अज्ञानतिमिरांधस्य व्रते
नानेन केशव ॥ प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥ नारदीये ॥ ब्राह्मणान्भोजये- २७६

सं.सि. च्छलत्यात्पादे दक्षिणां ततः ॥ स्कांदे ॥ कृत्वा चैवोपवासं तु योश्नाति द्वादशी दिने ॥ नैवेद्यतुल-
४५७ सीमिश्रं हत्या कोटि विना शनम् ॥ द्वादश्यां वर्ज्यान्याह ॥ दिवानिद्रा परान्नं च पुनर्भोजनमै-
थुने ॥ क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥ विष्णुधर्मे ॥ असंभाष्यान्हि संभा-
ष्य तुलस्यमलिकादलम् ॥ आमलक्याः फलं वापि पारणे प्राश्य शुद्ध्यति ॥ पारणाधिकारे
विशेषः ॥ सनत्कुमारीये ॥ मैत्राद्यपादे स्वपिती ह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च ॥ पौष्णस्य-
जागर्त्ति तथावसाने नो पारणं तत्र बुधः प्रकुर्यात् ॥ रजस्वलां च चांडालं महापातकिनं त-
था ॥ सूतिकां पतितं चैव उच्छिष्टं रजकादिकम् ॥ स्तुत्वादिग ध्ये च्छृणु या च्छ्रेयो ध्वनिसु-
त्तमः ॥ अष्टोत्तरसहस्रं तु जपेद्देवं दृष्ट्वा नरम् ॥ एतद्व्रतं सूतकेऽपि कार्यम् ॥ तथा च विष्णुः
सूतके मृतके चैव न त्याज्यं द्वादशी व्रतम् ॥ तत्र स्वस्तं दानादि सूतकांते कार्यम् ॥ मात्स्ये
॥ सूतकांते नरः स्नात्वा पूजयित्वा जनार्दनम् ॥ दानं दत्त्वा विधानेन व्रतस्य फलमश्नुते ॥
रजोदर्शनेऽपि कार्यम् ॥ पुलस्तिः ॥ एकादश्यां न भुंजीत दृष्टे नारी रजस्यपि ॥ यदा द्वादश्यां- ४५७

ए·नि श्रवणे चेन्नद्यात्शुद्धामप्येकादशीं त्यक्त्वा तत्रैवोपवासः कार्य्यः ॥ शुक्ला वा यदि वा कृष्णा द्वादशी श्रवणा
४५८ न्विता ॥ तयोरेवोपवासं च त्रयोदश्यां च पारणम् ॥ इति नारदीये ॥ एते च नियमाः काम्य ह्य
ते नियताः ॥ नित्यव्रते सति संभवे कार्य्याः ॥ तत्र कात्यायनः ॥ शक्तिमांस्तु ततः कुर्य्यान्निय
मं च विशेषणम् ॥ अशक्तो वु माधवीये ॥ इति विज्ञाय कुर्व्वीतावश्यमेकादशीव्रतम् ॥ विशे
यनियमाशक्तावहोरात्रं भुजिवर्ज्जितः ॥ इति साधारणनिर्णयः अथ विशेषनिर्णयः अथ चैत्रै
कादशी तत्र स्त्रीभि रुक्मिणी पूज्या तदुक्तं ब्रह्मपुराणे ॥ एकादश्यां ततः स्त्रीभिर्देवी पूज्या च रु-
क्मिणी ॥ पुष्पालंकार धूपान्न वस्त्र ब्राह्मण तर्प्पणैः ॥ तत्रैव रात्रौ सलक्ष्मीको वासुदेव
स्योत्सव मांदोलनीयः ॥ चैत्रमासस्य शुक्लाया मेकादश्यां तु वैष्णवैः ॥ आंदोलनीयो
देवेशः सलक्ष्मीको महोत्सवे ॥ दमनेनार्च्चयित्वा च रात्रौ जागरणं चरेदिति ॥ अथ ज्ये-
ष्ठशुक्लैकादशी निर्ज्जला ॥ तत्र निर्ज्जलमुपवासं कुर्य्यात् ॥ तदुक्तं स्कंदपुराणे ॥ ज्येष्ठे मासि नृ-
प श्रेष्ठ या शुक्लैकादशी भवेत् ॥ निर्ज्जलं समुपोष्यात्र जलकुंभान्स शर्करान् ॥ प्रदा ४५८

यविप्रमुख्येभ्यस्तापत्रयविवर्जितः ॥ विसुलोकमवाप्येह मोदन्ते विसुनासह ॥ इति निर्ज-
लैकादशी ॥ आषाढशुक्लैकादशी हरिशयनी ॥ तत्र लक्ष्मीनारायणमूर्तिं सौवर्णीं पूज्य रात्रौ जा-
गराद्युत्सवं कुर्यात् ॥ पुराणसमुच्चये ॥ आषाढस्य सिते पक्षे एकादश्यामुपोषितः ॥ स्थाप-
येत्प्रतिमां विष्णोः शंखचक्रगदाधराम् ॥ पीताम्बरधरां सौम्यां पर्य्यंके स्वास्तृते शुभे ॥ शु-
क्ल वस्त्रसमाछन्ने सोपधाने युधिष्ठिर ॥ स्नापयित्वा दधिक्षीरघृतक्षौद्रजलैस्तथा ॥ समा-
लभ्य शुभैर्गन्धैर्धूपैर्वस्त्रैरलंकृताम् ॥ पूजितां कुंकुमैश्शुक्लैर्मन्त्रेणानेन पाण्डव ॥ मंत्रश्च सु-
प्ते त्वयि जगन्नाथ जगत्सुप्तं भवेदिति ॥ विबुधे त्वयि बुद्धं च जगत्सर्वं चराचरमिति ॥ एवं सं-
पूज्य देवस्याग्रे चातुर्म्मास्यव्रतं कुर्य्यात् ॥ तदुक्तं भारते ॥ एकादश्यां तु गृह्णीयात्संक्रान्तौ क-
र्कटस्य च ॥ आषाढ्यां वा नरो भक्त्या चातुर्म्मास्योदितं व्रतमिति ॥ व्रतारंभे मंत्रः सनत्कुमारसंहि-
तायाम् ॥ इदं व्रतं मया देव गृहीतं पुरतस्तव ॥ निर्विघ्नं सिद्धिमायातु प्रसन्ने त्वयि केशव ॥ गृ-
हीतेऽस्मिन् व्रते देव यद्यपूर्णो म्रियाम्यहम् ॥ तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥

भ॰कृ॰ इति शयनी ॥ अथ भाद्रशुक्लैकादश्यां ॥ शयनैकादश्या शिवपूजोत्सवादि कुर्य्यात् तदेव भविष्ये
४९० मासे भाद्रपदे मासि एकादश्यां सिते हनि ॥ कद्रदानं भवेद्दिव्यं संपूज्य पूजां प्रवर्त्तयेदिति ॥ क
द्रदानं पार्श्वपरिवर्त्तनम् ॥ अथ कार्त्तिकशुक्लैकादशी ॥ तत्र देवपूजा जागरोत्सवादिभिर्मंत्रेण प्र
बोध्य रथयात्रोत्सवं कुर्य्यात् ॥ तदेव ब्रह्मपुराणे ॥ एकादश्यां च शुक्लायां कार्त्तिके मासि केशव-
म् ॥ प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः ॥ नृत्यैर्गीतैस्तथा वाद्यैर्ऋग्यजुस्साममंगलैः ॥
स्तोत्रैश्च विविधैः स्तुत्वा पूजयेद्दह पोष्णुभैः ॥ होमैर्भक्ष्यैः पुष्पैश्च फलैः पर्णाङ्कुरपातुर्सैः ॥
द्वाभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा ॥ कुंकुमालक्तकाभ्यां च रक्तसूत्रैस्सकंकणैः ॥ त
स्यां रात्र्यां व्यतीतायां द्वादश्यामरुणोदये ॥ आदौ घृतेन स्नपेण मधुना स्नापयेत्ततः ॥ द
ध्ना क्षीरेण च ततः पंचगव्येन शास्त्रवित् ॥ उद्वर्त्तनं माषचूर्णं मसूरामलकानि च ॥ सर्वपा
ण्याभिषेकं गुरुत्वसातुलुंगागरुस्तथा ॥ सर्वौषध्यस्सर्वगंधाः सर्वबीजानि कांचनम् ॥ मंगला
नि यथाकामं रत्नानि च कुशोदकम् ॥ एवं संबोध्य देवेशं रथारोहे च नाम शुभात्मा ॥ ततस्तु क- ४९०

लक्षणं देया यथाम्नाता स्थले कृता ॥ जाती प्रसूत संयुक्ता सफलाश्च सकांचना ॥ सुरस्या
ह वेद घोषेन वीणा वेणु रवेणच ॥ एवं संस्नाप्य गोविंदं त्वनुलिप्तं स्थलं कृतम् ॥ सुवास
सं पूजयेच्च सुमनो भिः सुकुंकुमैः ॥ धूपैर्दीपैश्च नैवेद्यैश्च पायसेन च भूरिणा ॥ ब्राह्मणाः पू-
जनीयाश्च विश्वो रूपाश्च मूर्तयः ॥ यत्तु शिष्टान्नं पश्चाद्भोक्तव्यं ब्राह्मणैः सह ॥ इति
भविष्येऽपि ॥ कार्त्तिके शुक्लपक्षे तु एकादश्यां पृथासुत ॥ मंत्रेणानेन राजेन्द्र देवमु त्थापये
द्द्विजः ॥ मन्त्रश्च ॥ इदं विष्णु र्विचक्रमे इति ॥ वैदिकः ॥ पौराणिकस्तु ॥ ब्रह्मेन्द्र रुद्राग्नि कुबेर सूर्य्य
सोमादिभि र्वन्दित वन्दनीय ॥ बुध्यस्व देवेश जगन्निवास मंत्र प्रभावेन सुखेन देव ॥ इदं
च द्वादशी देव ॥ अपरश्च मंत्रः ॥ उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते ॥ त्वयि सुप्ते जग
त्सुप्तमुत्थिते चोत्थितं जगत् ॥ उत्थापनं च दिवैव कार्य्यम् ॥ तदपि रेवत्यंत चरणयो-
गे तदभावे केवल तिथौ संध्या काले ॥ तथा च भविष्ये ॥ आभाकाशितपक्षेषु मैत्रश्रवणरे-
वती ॥ आदिमध्यावसानेषु प्रस्वापावर्त्तनो त्सवाः ॥ एतच्च संभवाभिप्रायेण ज्ञेयम् ॥

तथाच ॥ निशि स्वापो दिवो त्थानं संध्यायां परिवर्त्तनम् ॥ अन्यत्र पादयोगेऽपि द्वादश्या
मेव कार्यं दिति ॥ विष्णुधर्मोत्तरे ॥ विष्णोर्दिवा न स्वपिच न च रात्रौ प्रबुध्यते ॥ द्वादशी ऋ-
क्षसंयोग पादयोगो न कारणमिति ॥ रात्रौ नक्षत्रादि योग लाभेऽपि दिवैवोत्थापनमि-
त्यर्थः ॥ पूर्वोक्तमंत्रेण देव मुत्थाप्य पुष्पांजलिं दद्यादनेन च ॥ चरणपवित्र मिति वैदिकः
॥ पौराणिकस्तु ॥ गता मेघा वियच्चैव निर्मलं निर्मला दिशः ॥ शारदानि च पुष्पाणि
गृहाण मम केशव ॥ महापूर्य्य रथेणो स्थिते विष्णो तं स्यन्दने संस्थाप्य रात्रौ जागरणादि
विधाय प्रभाते ब्राह्मणान्भोज्य ब्राह्मणाग्रे पूर्वकृतं चातुर्मास्य व्रतं प्रोच्य विप्रेभ्यो
दक्षिणां दत्वा श्रीनाथं प्रार्थये दनेन ॥ मन्त्रः ॥ इदं व्रतं मया देव कृतं प्रीत्यै तव प्रभो
॥ न्यूनं संपूर्णतां यातु त्वत्प्रसादाज्जनार्दन ॥ इति प्रार्थ्य स्वयमपि भुंजीत ॥ इति बो-
धिन्येकादशी ॥ अथ फाल्गुन शुक्लैकादशी आमर्दकीत्युच्यते ॥ तत्रामर्दकस्थितं विष्णुं सं-
पूज्य दक्षिणां दद्यात् ॥ तदेव भविष्ये ॥ फाल्गुने मासि शुक्लायामेकादश्यां जनार्दनः ॥ ४९६

वसत्यामलकीवृक्षे लक्ष्म्या सह वनस्पतिं ॥ ततस्तं पूज्य विधिवद्भक्त्या कुर्यात्प्रदक्षिणा
म् ॥ उपोष्य विधिवत्कल्यं विष्णुलोके महीयते ॥ इतिवृद्धनिर्णयः ॥ आमलकमूले वि-
ष्णुं संस्थाप्य प्रदक्षिणाः कुर्यादष्टोत्तरशतम् ॥ रत्नैः सुवर्णै रूप्यैर्वा फलैरन्यैर्ध्य वा-
दिभिर्वा ॥ तथा च ॥ यश्चामलकशाय्यायां गृहे चैवाधिवासयन् ॥ विष्णोः प्रदक्षि-
णां कुर्यात्तस्य स्यादधिकं फलमिति ॥ इत्यामर्दकी सर्वास्वेकादशीषु तिथिपतित्वे-
न शिवः पूज्येति दिक् ॥ इत्येकादशीनिर्णयः ॥ अथ द्वादशीनिर्णीयते ॥ द्वादश्युपवासादि-
षु स्कादशी युतैव ग्राह्या युग्मवाक्यात् ॥ त्रयोदशीवेधस्तु निषेधः कूर्मपुराणे ॥ ना-
गविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ॥ कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु चासुराः
॥ विष्णुर्द्वादशी ॥ कामस्त्रयोदशी ॥ यदा भवेदतीवाल्पा द्वादशी पारणादिने ॥ उष-
ःकाले द्वयं कुर्यात्प्रातर्माध्याह्निकं तदेति ॥ स्कांदे ॥ चैत्रशुक्लद्वादश्यां दमन
कार्पणम् ॥ आषाढशुक्लद्वादश्यां तप्तमुद्राधारणम् ॥ तद्ब्राह्मणविषयमेव-

४ संस्थि निरपवादः ॥ तथाच पाद्मे ॥ यथाश्वस्थानजं कांड गर्हितं सर्वकर्म्मसु एवं चक्रांकितो वि-
४४ प्रः सर्वकर्म्मसु गर्हितः । विप्रविषये निरापरकानि बहूनि वाक्यान्युपलभ्यंते विस्तरभि-
यान लिखितानि ॥ अत एव शूद्राणां प्राशस्त्यं धर्म्मने वेति दिक् ॥ श्रावण शुक्ल द्वादश्यां प-
वित्रारोपणं कार्य्यम् ॥ पाद्मे ॥ ऊर्ज्जे व्रतं मधौ दोला श्रावणे तंतुपूजनम् ॥ चैत्रे च दमना
रोपमकुर्वाणः पतत्यधः ॥ पवित्रारोपणं विष्णोः श्रावणे न भवेद्यदि ॥ कार्तिक्यवधि शु
क्लापि कर्तव्यमिति नारदः । शुक्लार्कः द्वादशी ॥ भाद्र शुक्ल द्वादश्यां मध्याह्ने वामनावता-
रः ॥ तत्र श्रवणयोगे उपवासः इदं व्रतं काम्यम् ॥ विष्णुधर्म्मोत्तरे ॥ श्रवण द्वादशी योगे बु-
धवारो भवेद्यदि ॥ अत्यंत महती नाम द्वादशी सा प्रकीर्तिता ॥ स्नानं जाप्यं तथा दा-
नं होमं श्राद्धं सुरार्च्चनम् ॥ सर्वमक्षयमाप्नोति तस्यां भृगुकुलोद्वहेति ॥ नारदीयेऽपि ॥
द्वादश्यामुपवासोऽत्र त्रयोदश्यां तु पारणम् ॥ निषिद्धमपि कर्तव्यमित्याज्ञा पारमे
श्वरी ॥ श्रवण द्वादशी व्रतं श्रवणैकादशी व्रतं कार्य्यमिति रामकौतुके ॥ भविष्ये ॥ ८२६

संशि एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् ॥ न तत्र विधिलोपः स्यादुभयोर्देवतं हरिः
४९५ ॥ नारदीये ॥ यदा न प्राप्यते ऋक्षं द्वादश्यां श्रवणं क्वचित् ॥ एकादशी तदा पोष्या पाप-
घ्नी श्रवणान्वितेति ॥ यद्येकादशी श्रवणयुता चेत्तदा एकादशी व्रतं श्रवणद्वादशी व्र-
तं द्वयमेव कृतं भवति ॥ तदेव मात्स्ये ॥ द्वादश्यां श्रवणस्पर्शे चेत्स्पृष्टैकादशी यदि ॥
स एव वैष्णवो योगो विष्णुशृंखलसंज्ञकः ॥ तस्मिन्नुपोष्य विधिवन्नरः संक्षीण-
कल्मषः ॥ प्राप्नोत्यनुत्तमां सिद्धिं पुनरावृत्तिवर्ज्जितामिति ॥ व्रतद्वयाप्तौ ॥
स्कान्दे ॥ प्रथमेन्हि फलाहारी निराहारी परेहनि ॥ उपोष्यैकादशीं मोहात्पार-
णं श्रवणे यदि ॥ करोति हंति तत्पुण्यं द्वादशद्वादशीभवमिति ॥ तदा तु द्विती-
यदिने श्रवणस्पर्शस्त्वर्द्धं तदा ऋक्षांते नापेक्ष्यः (?)णीयः ॥ ऋक्षान्ते पारणं कुर्य्या-
द्विना श्रवणरोहिणीमिति वचनात् ॥ अन्ये तु ॥ आषाढाश्वित पक्षेषु मैत्रश्रव-
णरेवती ॥ संगमे नहि भोक्तव्यं द्वादशद्वादशीक्षयादिति ॥ दिनद्वये तत्सत्वे-

ग.नि. उदयं तद्युक्ता ग्राह्या ॥ उदय व्यापिनी ग्राह्या श्रवणा द्वादशी बुधैरिति वृहन्नारदीयात् ॥
४६६ श्रवणा योगे तु दशमी विद्धापि ग्राह्याग्निपुराणात् ॥ एतावांस्तु विशेषः ॥ श्रवण द्वा-
दश्यां वामनावतारः ॥ कृष्णपूजा श्रवणा द्वादश्यां जनार्दनं पूजयेदिति ॥ अत्र जपहोमा-
दिकं कृत्वा सौवर्णीं हरिप्रतिमां संप्रतिष्ठितां दध्योदनं जलपूर्णं कुम्भं उपानहौ छत्रं
च विभाय दद्यात् ॥ इति श्रवण द्वादशी ॥ अस्यामेव इन्द्रध्वजो स्थापनं कुर्य्यात् ॥ यदुक्तं मा-
त्स्ये ॥ द्वादश्यां च सिते पक्षे मासि भाद्रपदे तथा ॥ शक्रमुत्थापयेद्राजा विश्वरक्षत्र-
ये सतीति ॥ अथ कार्त्तिक कृष्ण द्वादश्यां ॥ गोधूलिका काल व्यापिन्यां गोवत्स पूजा कार्य्या
॥ तस्यास्तत्काल एव विधानात् ॥ दिनद्वये तत्काल व्यापित्वे पूर्वैव ॥ तदुक्तं ॥ वत्सपू-
जा वटश्चैव कर्तव्या प्रथमेऽहनि । इति वत्स द्वादशी ॥ अथ माघ कृष्ण द्वादश्यां ॥ तत्र तिलैः
स्नात्वा विष्णुमभ्यर्च्य तिलैर्दीपं दत्वा तिलतैलेन नैवेद्यं होमदानानि तिलतैलेने-
व कृत्वा तिलान्भक्षयेत् ॥ तदेव मात्स्ये ॥ माघे तु कृष्ण द्वादश्यां यमो हि भगवान्पुरा । ४६६

शि तिलानुत्था दयासास तपः कृत्वातुदारुणाम् ॥ राजा दशरथो भूमौ तस्मात्तान्नवतारयत्
७ ॥ तिलानामाधिपत्ये तु विष्णुस्तत्र कृतः सुरैः ॥ तस्मामुपोषितः स्नातस्तिलैस्तस्यां यजे
ज्जरिम् ॥ तिलतैलेन दीपाश्च देया देवगृहेषु च ॥ निवेदयेत्तिलानेव होतव्याश्च तथा
तिलाः ॥ तिलान्दत्वाच विप्रेभ्यो भक्षयित्वा तिलानिति ॥ इति तिलद्वादशी ॥ माघस्यो भ-
य द्वादश्यां तैलाभ्यंगो न कार्य्यः ॥ यदुक्तं मात्स्ये ॥ उपाध्ये कादशी माघे द्वादश्यां तैलसेव-
नात्कुरूपं प्राप्नुवान्देहे पुराले कःपुरूरवा इति ॥ सर्वास्वपि द्वादशीषु विल्व फलं दंत-
काष्ठं च वर्ज्जयेदित्यलम् ॥ इति द्वादशी निर्णयः ॥ अथ त्रयोदशी निर्णीयते ॥ सा तु ॥ शुक्लान्य
योदशी पूर्वा परा कृष्णा त्रयोदशीति माधवीये ॥ एषा तु प्रदोष व्यापिनी दिन द्वये व्याप्ता व-
व्याप्तौ वा पूर्वा ॥ सुमन्तुः ॥ त्रयोदशी तु कर्तव्या द्वादशी सहिता पुनः ॥ ब्रह्मोत्तरखंडेऽपि ॥
पक्ष द्वये त्रयोदश्यां निराहारो भवेद्दिवा ॥ घटिका त्रितयात्पूर्वं स्नानं समाचरेत् ॥
अथ चैत्रशुक्लत्रयोदशी ॥ अनंगत्रयोदशी ॥ सा च पूर्वे वोपोष्या ॥ तथा च संवर्तः ॥ भविष्येऽपि

शे ॥ अस्यां स्नात्वा त्रयोदश्यां मध्ये कामं नरो लिखेत् ॥ सिंदूररजनीरंगै रतिप्रीतिसम-
८ न्वितम् ॥ कामदेवं वसंतं च वाजि चक्रं वृषध्वजम् ॥ मध्यान्हे पूजयेद्भक्त्या भक्ष्यैर्गो-
धैस्त्र गंधैः ॥ मन्त्रेणानेन कौंतेय नवनाद्यैः समन्वितः ॥ मंत्रः ॥ नमो रामाय कामा-
य देवदेवस्य मूर्तये ॥ ब्रह्मविष्णुशिवेन्द्राणां नमः क्षेमकराय वै ॥ इति ॥ ततस्तस्याग्र-
तो देया मोदकाघृतपाचिताः ॥ नाना प्रकार भक्ष्यश्च कामो मे प्रीयतामिति ॥ स्वप-
तिं पूजयेन्नारी वस्त्रमाल्यविभूषणैः ॥ कामोयमिति संचिंत्य प्रहृष्टेनांतरात्मना ॥
रात्रौ जागरणं कुर्यात्सुखरात्रिर्यदा भवेत् ॥ पूजयेद्द्विजदांपत्यं वस्त्रालंकारचंदनैः
॥ एवं यः कुरुते पार्थ वर्षे वर्षे महोत्सवम् ॥ वसंतसमये प्राप्ते हृष्टः पुष्टः सदा भवेत् ॥
कौर्म्मे विशेषः ॥ मधौ शुक्लात्रयोदश्यां मदनं चंदनात्मकम् ॥ कृत्वा संपूज्य यत्नेन वी-
जयेद्व्यजनेन च ॥ ततः संधुक्षितः कामः पुत्रपौत्रसमृद्धिदः इति ॥ अथ भाद्रशुक्लत्रयोदशी
युगादिः ॥ शुक्ल चांद्रमासाभिप्रायेण ॥ अत्र मधुघृतसहितेन पायसेन श्राद्धं कुर्य्यात् ॥ ४६८

तथाच पितृगाथा ॥ अपिनस्तकुलेजायाद्योनोदद्यात्त्रयोदशीम् ॥ पायसंमधुसर्प्पिर्भ्यां वर्षासुच मघासुचेति ॥ अथकार्तिकशुक्लत्रयोदशी ॥ तत्रयमदीपंरात्रौवहिर्दद्यात् ॥ तथा च स्कान्दे ॥ कार्तिकस्यासितेपक्षेत्रयोदश्यांनिशामुखे ॥ यमदीपंवहिर्दद्यादपमृत्युर्विनश्यति ॥ दीपदानमंत्रश्च ॥ मृत्युनापाशदंडाभ्यांकालस्यामलयासह ॥ त्रयोदश्यांदीपदानात्सूर्यजःप्रीयतामिति ॥ अत्रवंताकानिनभक्षयेत् ॥ सर्वासुत्रयोदशीषुअनंगःपूज्यःतिथिपतित्वात् ॥ इतित्रयोदशीनिर्णयः ॥ अथचतुर्दशीनिर्णीयते ॥ सान्दकस्मापूर्वाशुक्लोत्तराकृष्णपक्षे ऽष्टमीचैवकृष्णपक्षेचतुर्दशी ॥ पूर्वविद्धैवकर्त्तव्यापरविद्धानकुत्रचिदित्यापस्तंबोक्तेः ॥ शुक्लपक्षे ऽष्टमीचैवशुक्लपक्षेचतुर्दशी ॥ पूर्वविद्धानकर्त्तव्याकर्त्तव्यापरसंयुता ॥ इतिवृहस्पतिः इतिचतुर्दशीसामान्यनिर्णयः अथविशेषः ॥ अथचैत्रशुक्लचतुर्दशी ॥ तस्यांकुंकुमागरुकर्पूरादिभिर्दमनकेनचशिवपूजा ॥ तदेवदेवीपुराणे ॥ चतुर्दश्यांतुकर्पूरचंदनागरुकुंकुमैः ॥ वस्त्रादिमणिपूजाचकर्त्तव्या

महती शिव ॥ वितानध्वज चत्रंच देयं पूज्यास्तु मानवः ॥ सद्स्तु राजमवाप्नोति क्षंस्मे-
धप्राताधिक मिति ॥ अन्यच्च मधुमासेतु संप्राप्ते शुक्लपक्षे चतुर्द्दशी ॥ प्रोक्ता दमन पूजे-
ति सिद्धिदा तु महोत्सवेति ॥ लिंगपुराणे विशेषः ॥ दमनस्तु त्रयोदश्यां ताल हंतानले नतु
हंसयान समारूढ़ काम मंत्र प्रवर्द्धितः ॥ नारी भिर्विजितश्चैव त्रैलोक्योन्माद माचर-
न् ॥ तन्निर्वाप या कामेन चतुर्द्दश्यां महामुने ॥ ततोन्यर्थं मया प्रोक्तानाथ प्रवाय नरा-
स्तथा ॥ कुर्वंति कर्द्दमे नैव आत्मन स्त्वनुलेपनं । निर्वापितानंग पीडा भवत्येव समाकृ-
या ॥ एतदर्थं सदा कार्य्यं कर्द्दमेन च क्रीडनम् ॥ प्रातः प्रहर मात्रंच कर्तव्यं क्रीडनं नरैः ॥ प्र-
क्षाल्यांगं ततः कृत्वा गंधमाल्यानु लेपनम् ॥ वस्त्र तांबूल गीतादि रथ्या हट्टेषु चाचरेत् ॥
चर्च्चरी घोषिते श्चैव कृत्वा नृत्यं शिवागतः ॥ सर्वकाम समृद्धस्तु वसे च्छिवपुरे नरः ॥ स्वयं
तु लिंगमेकं तु दृष्ट्वा तस्मिन्दिने नरः ॥ ज्ञानं लब्ध्वा नरः सम्यक् शिव एव न संशयः ॥ इ-
ति चैत्र चतुर्द्दशी ॥ अथ वैशाख शुक्ल चतुर्द्दशी ॥ सा च प्रदोष व्यापिनी ॥ तथा च स्कान्दे ॥ वैशाख स्य- ४००

सं०४ चतुर्दश्यां सोमवारे निलसंके॥ अवतारो नृसिंहस्य प्रदोषसमये द्विजा इति॥ अनि-
४७१ लर्क्षः स्वाती॥ स्वातीयोगप्राधान्यं चैतन्नाम॥ अथ ज्येष्ठशुक्लचतुर्दशी॥ तस्मिन्दिने पं-
चतपाः सायं शिवप्रीतये हिरण्यं धेनुं दद्यात्॥ तदेव मात्स्ये॥ ज्येष्ठे पंचतपाः सायं हेम-
धेनुप्रदो दिवम्॥ यात्यष्टमी चतुर्दश्यो रुद्रव्रतमिदं स्मृतमिति॥ अथ भाद्रशुक्लचतुर्द-
शी॥ तस्यामनंतव्रतं सा चोदयव्यापिनी ग्राह्या॥ स्कान्दे मुहूर्तमपि चेद्भाद्रे पौर्णमास्यां
चतुर्दशी॥ तां संपूर्णां विदुस्तस्यां पूजयेद्विष्णुमव्ययम्॥ मुहूर्तमपि त्रिमुहूर्तं प्रशं-
सापरम्॥ तेन त्रिमुहूर्तः मुख्यः कल्पः द्विमुहूर्तानुकल्प इति माधवः॥ अत्र विधिः॥ पक्वान्न-
स्थं घृते नैव गोधूमान्नं प्रयत्नतः॥ अर्द्धं विप्राय दातव्यमर्द्धमात्मनि भोजयेदिति॥ च-
तुर्दशग्रंथियुक्तसूत्रं वामे स्त्री दक्षिणे पुमान्॥ करे धारयेदिति। अनंतप्रतिमां चन्दनादि-
[redacted] सर्पमूर्तिरूपेण पूजयेत्॥ इदं व्रतं काम्यम् फलश्रवणात्॥ निर्णयभास्करेऽपि॥ अनंत-
रूपेण विभर्षि पृथ्वीमनंतलक्ष्मीवरदोऽसि तुष्टः॥ अनंतलोकान्प्रददासि लोके मोऽनं- ४७१

सं.सि. नरूपिन् कुरुमे प्रसादम् ॥ इत्यनंतपूजामंत्रः ॥ अनंत संसार महासमुद्रे मग्नान्समभ्युद्धर
५७२ वासुदेव ॥ अनंतरूपे विनियोजयस्व अनंतसूत्राय नमो नमस्ते ॥ इतिनैवेद्यादिदानमंत्रः
अनंत कामदं देवं सर्वकामफलप्रदम् ॥ अनंत धर्ममयं डोरं पुत्रपौत्रविवर्द्धनम् ॥ बध्ना-
मीति शेषः ॥ अनेन चतुर्दश ग्रंथिमयं डोरकं बध्नीयात् ॥ इत्यनंतचतुर्दशी ॥ अथ कार्त्तिक
कृष्णचतुर्दशी ॥ यमचतुर्दशी सैवे नरकेति ॥ ब्राह्ममुहूर्त्तप्रातः कालव्यापिनी ग्राह्या ॥ अ-
त्रोपस्यभ्यंग स्नानं च कृत्वा ॥ धर्मराज तर्पणं माष पत्राशनं सेव प्रतिमा पूजनं दीपदा-
नादिकं कुर्य्यात् ॥ तदेवभविष्ये ॥ कार्त्तिके कृष्णपक्षेतु चतुर्दश्यामिनोदये ॥ अवश्यमेव क-
र्त्तव्यं स्नानं नरकभीरुभिरिति ॥ इनो ऽत्र चंद्रः ॥ यदि पूर्वेन्हि पंच घटिका त्रयोदशी स्यात्
पंच पंचाशत् ॥ एवं संभवे त्रयोदशी मध्ये ऽरुणोदये स्नायात् ॥ ततो ऽन्यत्र स्नाननिषे-
धात् ॥ तथाच यमः ॥ अरुणोदयेतो ऽन्यत्र रक्तायां स्नाति यो नरः ॥ तस्याब्दिकभवो धर्मो न-
श्यत्येव न संशयः ॥ अत्र च वर्णाति तैलस्नानम् ॥ तदेवभविष्ये ॥ आश्विने कृष्णपक्षेतु च- ५७२

धि तुर्दश्यां विधूदये ॥ तिल तैलेन कर्त्तव्यं स्नानं नरकभीरुभिरिति ॥ आश्विन शब्दो ऽत्र चंद्रमा-
८७१ सपरः ॥ ब्रह्मपुराणे ॥ तैले लक्ष्मी जले गंगा दीपमाल्याश्चतुर्दशी ॥ प्रातःस्नानं तु यः कुर्या-
द्यमलोकं न पश्यति ॥ प्रातश्च तु घटिका ऽरुणोदय काल इति ॥ संवत्सर प्रदीपे ॥ पाद्मे ॥ अ-
पामार्ग मथो तुंबी प्रपुन्नाटमथापरम् ॥ भ्रामयेत्स्नानमध्ये तु नरकस्य क्षयाय वै ॥
अपामार्गस्य पल्लवान्भ्रामयेच्छिरसोपरि ॥ ततश्च तर्प्पणं कार्य्यं धर्म्मराजस्य नामभिः
॥ अपामार्ग भ्रामण मंत्रस्तु ॥ सीता लोष्ठ समायुक्त सकंटक दलान्वित ॥ हर पापमपामार्ग
भ्राम्यमाण पुनः पुनः ॥ इति यमतर्प्पणं तु सव्येन कार्य्यं ॥ यतस्तस्य देवत्वं पितृत्वं च ॥
स्कान्दे ॥ दक्षिणाभिमुखो भूत्वा तिलैः सव्यं समाहितः ॥ देवतीर्थेन देवत्वात्तिलैः प्रेता-
धिपो यतः ॥ यमाय धर्म्मराजायेति चतुर्द्दश नामभिस्तर्प्पणं विधेयम् ॥ ततः प्रदोष सम-
ये दीपान्दद्यान्मनोरमान् ॥ ब्रह्म विष्णु शिवादीनां भवनेषु मठेषु च ॥ प्राकारोद्या-
न वापीषु प्रतोलीनिष्कुटेषु च ॥ मंदुरासु विविक्तासु हस्तिशालासु चैव हि ॥ लैङ्गे ॥ ८७१

४ संसि ततः प्रेतचतुर्दश्यां भोजयित्वा द्विजोत्तमान् ॥ शैवान् विप्रांस्त्वथ परान् शिवलोके-
४७४ महीयते ॥ दानं दत्वा तु तेभ्यश्च यमलोकं न गच्छति ॥ माघपत्रस्य शाकन्तु भुक्त्वा-
तत्र दिने नरः ॥ प्रेताचतुर्दशीकाले सर्वपापैः प्रमुच्यते ॥ नक्तं प्रेतचतुर्दश्यां यः कुर्याच्छिव-
वशीकये ॥ न तत्क्रतुशतेनापि प्राप्यते पुण्यमीदृशम् ॥ कुमारीवटुकान्पूज्य तथा शैवां-
स्तपोधनान् ॥ राजसूयफलं तेन प्राप्यते नात्र संशयः ॥ इति ॥ कार्तिकशुक्लचतुर्दश्यां ब्राह्मे-
मुहूर्ते विश्वेश्वरयात्रा ॥ सैव पाषाणचतुर्दशी ॥ देवीपुराणे ॥ कार्तिके शुक्लपक्षे तु या पाषाणचतु-
र्दशी ॥ तस्यामाराधयन् गौरीं नक्तं पाषाणभक्षकः ॥ ऐश्वर्यसौख्यसौभाग्यरूपा-
णि प्राप्नुयान्नरः ॥ इति ॥ मार्गशुक्लचतुर्दश्यां पिशाचमोचनयात्रा ॥ अथ माघकृष्णचतुर्दशी
रटंत्याख्या ॥ तत्रानुदिते स्नात्वा यमं संपूज्य सप्तभिर्नामभिः सप्ततिलोदकांजलिं द-
त्वा तिलहोमं च कृत्वा पितृभ्यः श्राद्धं च कृत्वा ब्राह्मणेभ्यः कृशरभोजनं च दत्वा स्व-
यमपि कृशरभोजनं कृत्वा सर्वपापैः प्रमुच्यते ॥ ब्रह्मांडे ॥ माघकृष्णचतुर्दश्यां विश्वेशे- ८:७५

वान्मरीचयः॥ निश्चे स्त्रिलका कारा प्रभात श्रोऽयस हस्तः॥ अनकाम्युदित कालस-
२७५ न्सुतारांशुकेष्वपि॥ राज्ञा च तत्र संपूज्यो यमः प्रलयभास्करः॥ निमित्तं पंच तारेयं तत्र श्रो
त्तं यतो भुवि॥ तदासापि निशा ज्ञेया तारा रात्रिः सुदारुणा॥ तत्रोपोष्य त्रयोदश्यां सं-
प्राप्ते तु निशाक्षये॥ स्नात्वा पूज्यो जगन्नाथो हरिः पूज्याश्च तारकाः॥ नैवेद्यैर्विविधा-
कारैः कृशरेण तु भूरिणा॥ वह्निः पूज्यश्च भगवान्घृताक्तैस्तिलतण्डुलैः॥ नमः प्रण-
व संयुक्तान्स तिलांश्च जलाञ्जलिम्॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च
॥ वैवस्वताय कालाय सर्वप्राणहराय च॥ सप्त सप्त प्रदेयानि पृथक् तेषां तिलोदकम्॥
कृशरं भोजनीयाश्च ब्राह्मणास्तदनन्तरम्॥ श्राद्धं दत्त्वा पितृभ्यश्च भुक्त्वा स्यात्सर्वपात-
कैः॥ ततो विभज्य बन्धुभ्यः कृशरं भक्षयेत्स्वयम॥ पीत्यर्दनी चतुर्दशी॥ महाशिवरात्रिर्वि-
लीयते॥ फाल्गुन कृष्ण चतुर्दशी शिवरात्रिस्तां निशीथव्यापिनी॥ ईशान संहितायाम्॥ ३०४
तपस्ये कृष्णभूताच शिवरात्रिः प्रकीर्तिता॥ महानिशान्वितायां तु तत्र कुर्यादिदं व्रतं।

सिति ॥ दिन द्वये निशी था व्याप्तौ तु पूर्वा ॥ कृष्णपक्षेऽष्टमी चैव त्याज्य पल्लवोक्तेः ॥ अथपर-
विधाय कानि वाक्यानि ॥ स्कान्दे ॥ चतुर्दशी च दर्शश्च एकीभूय यदा भवेत् ॥ तदोपवा-
सं कुर्वीत न च काम युते ह्नि ॥ अपरंच ॥ माघासिते भूत दिनं हि राजन् उपे तियोगं यदि पं-
चदश्याः ॥ जया प्रयुक्तां नहि जातु कुर्य्याच्छिवस्य रात्रिं प्रियकृच्छिवस्य ॥ अत्र पूर्व वि-
द्धा प्रति पादके वाक्ये ॥ पूर्व विद्धाया मर्द्धरात्रि युतायां चतुर्दश्या मुपवासः ॥ पर विद्धायामर्द्ध
रात्रि व्यापिन्यां चतुर्दश्यां उपवासः ॥ उभय त्रार्द्ध रात्रि व्यापिन्यां पर विद्धाया मेवोपवास
इति सिद्धांतः ॥ यत्तु प्रदोष व्यापिनी ग्राह्या शिव रात्रिः शिव प्रिये ॥ रात्रौ जागरणं यस्मा त्त-
स्मात्तस्या मुपोषणम् ॥ इदं वचनं अर्द्ध रात्र चतुर्दश्य भावे वेदितव्य म् ॥ यदुक्तं ॥ यदा न स्या-
च्छिवरात्रि स्त्वर्द्धरात्र्यां तदानघ ॥ प्रदोषे व्यापिनी ग्राह्या तदा शिव तस्मात्तिथिः ॥ अन्यानि
प्रदोष व्यापिनी विधायि कानि का क्यानि ॥ अर्द्ध रात्रा भावे वेदितव्यानि ॥ माधवमतेऽपि प्र-
दोष व्यापित्वे सति अर्द्ध रात्र व्यापिनी सोत्तमा ॥ अर्द्ध रात्र व्यापिनी मध्यमा प्रदोष व्यापि-

श्रि नीन्यूनेति सिद्धांतः ॥ अत्र पारणविषये ॥ तिथिमध्ये पारणं श्रेष्ठतरम् ॥ तिथ्यंते पारणं कु
४७७ र्य्याद्विना शिव चतुर्द्दशी मिति स्कान्दोक्तेः ॥ सा च शिवोपासकानां नित्या ॥ परात्परतरं ना-
स्ति शिवरात्रिः परात्परम् ॥ न पूजयति भक्त्येदं रुद्रं त्रिभुवनेश्वरम् ॥ जन्तुर्जन्मसहस्रेषु-
जायते नात्र संशयः ॥ शिवभक्तानां नित्यम् काम्यं त्वन्येषां ॥ शिवरात्रिव्रतं नाम सर्वपाप
प्रणाशनम् ॥ आचांडालमनुष्याणां भक्ति मुक्ति प्रदायकम् ॥ अत्र वाक्यानि ग्रंथ भूयस्त्वा
न्न लिखितानि ॥ इति चतुर्द्दशी निर्णयः ॥ अथ पूर्णिमा निर्णीयते ॥ सा वट सावित्री व्यतिरिक्त व्र-
तादिषु परान्वितैव कार्य्या ॥ भूत विद्धा न कर्तव्या दर्शः पूर्णा कदाचन ॥ वर्जयित्वा मुनिश्रेष्ठ
सावित्री व्रत मुत्तमम् ॥ इति ब्रह्मवैवर्ते ॥ सावित्री व्रतं भाद्रपद पूर्णायाम् ॥ अथ चैत्र्यादि मासी
॥ तत्र चित्रायुतायां चित्रवस्त्रं दद्यात् ॥ तदुक्तं विष्णुस्मृतौ ॥ चैत्री चित्रायुता चेत्स्यात्तस्यां पुण्य-
तमा स्मृता ॥ चित्रवस्त्र प्रदानेन सौभाग्य माप्नुयान्नरः ॥ ब्रह्मपुराणे विशेषः ॥ मंदे चार्के गुरौ
चापि वारेष्वेतेषु चैत्रकी ॥ तत्राप्युक्त मेधिकं पुण्यं स्नानेन लभते नरः ॥ दानमक्षयतां याति ४७७

पितॄणां तर्पणं तथा ॥ अत्र दमनकेन सर्वान्देवानर्चयेत् ॥ संवत्सरकृतपूजायाः फलं प्रा-
७५ प्नोति ॥ तत्रैव वा पुराणे ॥ संवत्सरकृतार्चायाः सफल्याखिलान्सुरान् दमनेनार्चयेच्चै-
त्र्यां विशेषेण सदा शिवमिति ॥ अथ वैशाखपूर्णिमा तत्राजिनदानं कुर्यात् ॥ यदाह विष्णुः
॥ कृष्णाजिने तिलान्कृत्वा हिरण्यं मधुसर्पिषी ॥ ददाति यस्तु विप्राय सर्वं तरति दुष्कृ-
तम् ॥ वैशाख्यां पौर्णमास्यां तु विशाखासु विशेषतः ॥ ससमुद्रगुहा तेन सशैलवन
कानना ॥ सप्तद्वीपान्विता दत्ता पृथिवी नात्र संशयः ॥ अथ ज्येष्ठपूर्णिमा ॥ तत्र छत्रोपा-
नहान्नं तिलदानं च ॥ यदाह विष्णुः ॥ ज्येष्ठी ज्येष्ठायुता चेत्स्यात्तद्छत्रोपानत्प्रदानेन-
नरो नराधिपत्यमाप्नोति ॥ आदित्यपुराणे ॥ ज्येष्ठे मासि तिलान्दद्यात्पौर्णमास्यां विशे-
षतः ॥ अश्वमेधस्य यत्पुण्यं तत्प्राप्नोति न संशय इति ॥ अथाषाढी पूर्णा ॥ तत्र चतुर्द-
श्यामुपोष्य विष्णुपूजनम् ॥ यदुक्तं ब्राह्मे ॥ चतुर्दश्यामुपोष्याथ पौर्णमास्यां यजेद्धरिमि-
ति ॥ अस्यामेवाषाढयुतायामन्नादिदानमक्षयम् ॥ यदाह विष्णुः ॥ आषाढ्यामाषाढ ५७८

म. शि. युतायामन्नपानादि दानमक्षयं भवति ॥ यदा चतुर्दश्यष्टादशनाडिकाधिका भवेत्-
४७९ तत्र सावित्रीव्रतमपि त्याज्यम् ॥ भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति पृ.
ष्टते ॥ अन्वष्टक्यं नित्यम् ॥ पितामहः ॥ अमावास्या व्यतीपात पौर्णमास्यष्टका सु-
च ॥ अत्र श्राद्धमकुर्वाणो नरकं प्रतिपद्यते ॥ आषाढी तु कोकिलाव्रतोपक्रमे संध्या-
काल व्यापिनी ॥ भविष्ये आषाढ पौर्णमास्यां तु सायंकाले ह्युपस्थिते ॥ संकल्पये-
न्मासमेकं श्रावणेऽप्यहं त्विदं ॥ व्यासपूजायां चोदयिकी त्रिमुहूर्ता ॥ विष्णुधर्मो-
त्तरे ॥ त्रिमुहूर्ताधिकं ग्राह्यं पर्वक्षौरं प्रणाशिनोरिति ॥ अत्र नगराद्बहिः प्रदोषसमये ॥
दीर्घवंशे ध्वजाबंधनं कृत्वा पूर्वादिवायुविचारः कर्तव्यः ॥ अथ श्रावणी पौर्णिमा ॥ तत्र
पौर्णमास्यां ग्रहण संक्रांति दोष रहितायां उदय काल व्यापिन्यां ऋग्वेदि यजु-
र्वेदि ऽपि यजुः शाखाध्यायिनः ॥ उपाकर्म कुर्युः ॥ श्रावणमासस्य श्रवण नक्षत्रे
धनिष्ठानक्षत्रे वह्वृचाः ॥ सामवेदिनस्तु श्रावणमासस्य पंचम्यां हस्तयुक्तायां कु- ४८०

अथि र्ध्युः ॥ औषधि प्रादुर्भाव गृह्यणादि दोषवर हितायां च सर्वे वा तुल्यमिति ॥ तदाह्यज्ञवल्क्यः
४८० ॥ अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन वा ॥ हस्तेनौषधिभावे वा पंचम्यां श्रावण-
स्य तु ॥ उपाकर्म्मनिदेपक्रमः ॥ अन्नाध्यायानामिति शाखाभिप्रायेण वचनम् ॥ गोभिलः
पर्वण्योदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ॥ बह्वृचाः श्रवणे चैव तु हस्ते चैव सामवेदि-
नः ॥ निगमेऽपि ॥ श्रावण्यां श्रावणी कर्म्म यथाविधि समाचरेत् ॥ उपाकर्म्म तु कर्त्तव्यं क-
र्कटस्थे दिवाकरे ॥ हस्तेन शुक्लपंचम्यां श्रावणे श्रवणे भवेदिति ॥ चतुर्द्दशी युक्तस्य पर्व-
णो निषेधाच्च ॥ चतुर्द्दश्यां समुत्पन्ना वसुरोमधु कैटभौ वेदान्खी कुर्वतः पश्चयानेस्तो-
जह्रतुः श्रुतीः ॥ हत्वा तावसुरौ देवः पातालतलवासिनौ ॥ आहृत्यताः श्रुतीस्तस्मै ददौ लो-
कगुरुः स्वयम् ॥ सप्राप्तवान् श्रुतीर्ब्रह्मा पर्वण्योदयिके पुनः ॥ अतो भूतयुते तस्मिन्नो-
पाकरणमिष्यते ॥ आसुरं वर्ज्जयेत्कालं वेदाहरणशंकयेति ॥ यजुः श्रावणी दुर्गनवमी
दूर्वा चैव हुताशनी ॥ पूर्वविद्धा तु कर्त्तव्या शिवरात्रिर्वलेर्दिनमिति ॥ एतस्य श्रावण्यां ४८०

वि विधीयमानं पवित्रारोपणविषयम् ॥ उपाकर्म्मांगभूतमास्युदाय क श्राद्धविषयं
२ वा ॥ अन्नतैत्तिरीयकपदमन्येषामपि यजुःशाखिनामुपलक्षकम् ॥ तेषां कालांत
राविधानात् ॥ व्यासः ॥ श्रावणे न तु यत्कर्म्म उत्तराषाढसंयुतम् ॥ संवत्सरकृतोऽध्या
यस्तत्क्षणादेव नश्यति ॥ धनिष्ठासंयुतं कुर्य्याच्छ्रावणं कर्म्म यद्भवेत् ॥ तत्कर्म्म
सफलं विद्यादुपाकरणसंज्ञितमिति ॥ उपाकर्म्म प्रकुर्वीत क्रमात्सामर्ग्यजुर्विदः
गृह्यसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु ॥ अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपक्रिया ॥ रु
ग्वशोकामयग्रस्ता शये तस्मिन्द्विजातयः ॥ अथात्र कर्त्तव्यमुच्यते ॥ यदुक्तं छन्दोगचेतसा ॥ भवे
दुपकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ॥ ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः ॥ बौधाय
नः ॥ गौतमादिऋषीन्सप्त कृत्वा दर्भमयान्पुनः ॥ पूजयित्वा यथाशक्ति तर्प्पयेद्दक्षसुव्रतान्
ततो देवान्पितॄंश्चैव तर्प्पयेत्परमांभसा ॥ उपाकर्म्मणि ग्रहणवेधदोषाभावः ॥ नित्ये-
नैमित्तिके जाप्ये च होमक्रियासु च ॥ उपाकर्म्मणि चोत्सर्गे ग्रहदोषो न विद्यते ॥ स्मृ- ४८२

त्यंतरे ॥ भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुणी तथा ॥ श्रावणी नृपतिं हंति ग्रामं दहति फाल्गुणी ॥ विशेषो ऽपि भविष्ये ॥ ततो ऽपराह्नसमये रक्षापोटलिकां शुभाम् ॥ कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैरिति ॥ अथोत्सर्गः । याज्ञवल्क्यः ॥ पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥ जलांते छंदसां कुर्युरुत्सर्गं विधिवद्द्विजा इति ॥ आषाढ्यामथवाष्टम्यां चतुर्दश्यामुमापतिं ॥ पवित्रै रर्चयेद्भक्त्या श्रावण्यां चेतरान्सुरानिति ॥ अथ भाद्रीपूर्णा ॥ तत्र सावित्रीव्रतम् ॥ तदेव भविष्ये ॥ शृणुष्व पांडवश्रेष्ठ सावित्रीव्रतमादरात् ॥ त्रयोदश्यां भाद्रपदे दंतधावनमाचरेत् त्रिरात्रं नियमं कार्यं उपवासस्य भारत ॥ अशक्तो तु त्रयोदश्यां नक्तं कुर्याद्दृढव्रतः ॥ अयाचितं च वा कुर्यादुपवासेन पूर्णिमां ॥ अथाश्विनपूर्णिमा ॥ सैव कौमुदी ॥ तस्यामिंद्रं लक्ष्मीं च पूजयेत् ॥ तदेव भारते ॥ पूर्णिमाश्वयुजे मासि कौमुदी परिकीर्तिता ॥ कुमुदैः पूजयेल्लक्ष्मीमिंद्रमैरावतस्थितम् ॥ निशि जागरणं कृत्वा परेऽह्नि तु समाचरेदिति ॥ अत्र घृतपूर्णपात्रं सुवर्णान्वितं दत्त्वा दीप्ताग्निर्भवति ॥ यदुक्तं लिंगेन ॥ आश्वयुज्यां तु

सं.शि ऋक्षं तिथौ तस्यां नराधिप । सा महाकार्त्तिकी प्रोक्ता देवानामपि दुर्लभा ॥ आग्नेयं कृ-
४०४ त्तिका याम्यं भरणी ॥ प्राजापत्यं रोहिणी ॥ यदा तु याम्यं भवति ऋक्षं तस्यां तिथौ क्व-
चित् ॥ तिथिः सापि महापुण्या मुनिभिः परिकीर्त्तिता ॥ क्षीरसागरदाने विशेषो ब्राह्मे ॥
पौर्णमास्यां तु संपूज्यो भक्त्या शंभो हरः सदा ॥ ततश्चंद्रोदये पूज्यास्तापसाः कृत्ति-
का सुषट् ॥ कार्त्तिकेयस्त्वथो खड्गी वरुणश्च हुताशनः ॥ धान्यैस्सशूकैर्द्वारैर्भू-
षितव्या निशागमे ॥ माल्यैर्धूपैस्तथा गंधैर्भक्ष्यै रुच्चावचैस्तथा ॥ परमान्नेक्षुलैले शणा-
केर्वह्नि ब्राह्मणतर्पणैः ॥ एवं देवांश्च संपूज्य दीपो देयो गृहाद्बहिः ॥ दीपोपांते तथाग-
र्तश्च तुरगो मनोहरः ॥ चतुर्विंशांगुलः कार्य्यः सिक्तश्चंदनवारिणा गवां क्षीरेण संपू-
र्णस्समंतात्परिरक्षितः ॥ तत्र हेममयो मत्स्यो मुक्तानेत्रो मनोहरः ॥ प्रक्षेप्तव्यो-
विधानेन नमोऽस्तु हरये पठेत् ॥ ब्राह्मणाय च योग्याय दद्यात्क्षीरसागरम् ॥ इति कार्त्ति-
की ॥ अथ मार्गशीर्षी ॥ तत्र चन्द्रार्चा ब्रह्मांडे ॥ वामनेत्रं हि यद्विष्णोस्तदेव भुवनत्रयम् ॥ अन- ४०४

सं०क्रि सूर्यात्मजश्चंद्रः स्यात्कृतेनाभ्यषिंचयत् ॥ पौषी मास्यां तु यस्यां तु ...
४८५ यस्मात्तुलवर्णादेव दक्षशापाद्विनिःसृतं ॥ माता स्वसा च दुहिता संपूज्याश्च कुलांगनाः
॥ कांतिरूपं भवेत्स्त्रीणां पूर्णेन्दोः पूजनादिति ॥ यस्यां मृगशिरोयुक्तायां तस्य परिमि-
नं चूर्णितं सुवर्णयुक्तं ॥ लवणं चंद्रोदये स्यात् ॥ विष्णुनोक्तत्वात् ॥ अथ पौषी पूर्णा ॥ तत्र
पौषयुक्तायाम लक्ष्मीनाशनं गंगास्नानादिकं कार्यं यथाशक्ति स्नानादिकं दातव्यं स्व
यमपि घृतपायसं भोक्तव्यमिति दिक् ॥ इति पौषी ॥ अथ माघी पूर्णा ॥ तत्र मघायुक्तायां ति-
लैश्श्राद्धं कृत्वा तिलपात्रादिदानम् ॥ यदुक्तं भविष्ये ॥ माघ्यां मघासु च तिलैस्संतर्प्य पितृदेव
ताः ॥ तिलपात्राणि देयानि तिलास्स पललोदनम् ॥ कंबलाजिनरत्नानि मो चक्रो पापमो-
चको ॥ उपानद्दानमत्रैव तिलदानं च शस्यते ॥ यत्र वा तत्र वा स्नानं दानं वित्तानुरूपतः ॥
पौर्णमास्यां तु यो माघे पूजयेद्विधिवत्स्थितम् ॥ सोऽश्वमेधमवाप्येह विष्णुलोके महीं-
यते ॥ अथ फाल्गुणी पूर्णा ॥ सा पूर्वविद्धा सायान्हव्यापिनी ग्राह्या ॥ यदुक्तम् ॥ सायान्हे होलि- ४८५

क्रां कुर्य्यात् सूर्वान्हे क्रीडनं गवां सू ॥ दीपनस्या प्रदोषे तु धर्म्मोस्यः सनातनः ॥ निशागमे तु
पूज्येत होलिका सर्वदा बुधैः ॥ न दिवा पूजयेद्वह्निं पूजितो दुःखदो भवेत् (तंत्रभद्रायां होलिकां
कां न दीपयेत् ॥ यदुक्तम् ॥ भद्रायां दीपिता होला राष्ट्रभंगं करोति हि ॥ नगरस्य च नैवेष्टा
स्मात्तां परिवर्ज्जयेत् ॥ भद्रायां ते पौर्णमास्यां रात्रिशेषे शुभे ऽपिवा ॥ होलां प्रज्वाल्य
कुर्वीत पिशाचानां महोत्सवम् ॥ तथा दिनार्द्धात्परतोऽपिस्यात्फाल्गुन्या पूर्णिमा यदि
॥ रात्रौ भद्रावसाने तु होलिकां तत्र दीपयेदिति परदिने दिनार्द्धात्परतोऽपिस्यात्फाल्गु-
न्यां पूर्णिमायां विद्यमानायां ॥ पूर्वनिशायामेव रात्रौ भद्रावसाने होलिकां दीपयेदित्यर्थः
यदा पुनः परदिने पूर्णिमा सार्द्धयामत्रयव्यापिनी प्रतिपच्च वृद्धिगामिनी तदा रात्रावेव
होलिका कार्य्या ॥ तथाच भविष्ये ॥ सार्द्धयामत्रयं वा स्याद्द्वितीयदिवसे यदा ॥ प्रतिपद्-
दृश्यमानापि तदा सा होलिका स्मृता ॥ यत्तु ॥ वन्हौ वन्हिं परित्यजेदिति वन्हौ होलिका-
याम्वह्निं परित्यजेत् न तु पर्वणि इत्यर्थः ॥ एतत्तु सायंकाले भद्रारहित पूर्णिमायां ...

शि ना॥ अतिक्रम्य प्रतिपदि न कर्त्तव्यम्॥ अन्यथा॥ भविष्योत्तरवाक्यस्य निरर्थकता स्यादि-
ति॥ अत्र चेच्चन्द्रोपरागस्तदा ग्रहणात्पूर्वकं॥ निशि निर्विष्टिपूर्णायां होलिकादीपनं स्मृ-
ऽथ पूर्वदिने अल्पमनावधि चतुर्दशी द्वितीयदिने प्रदोषसमये ग्रस्तोदितं तदा पूर्वदि-
ने घट्यवशिष्टरात्रिचतुर्थयामे विष्टिपुच्छे होलिका कार्या द्वितीयदिने ग्रहणानंतरं
प्रतिपत्संभवेत्॥ ग्रहणात्पूर्वं च दिवा होलाप्रज्वलननिषेधाद्विष्टिपुच्छस्य सर्वकार्या-
र्हत्वदर्शनाच्च॥ पल्लवः॥ पृथिव्यां यानि कर्माणि शुभान्यप्यशुभानि च॥ तानि सर्व-
णि सिद्ध्यन्ति विष्टिपुच्छे न संशयः॥ संवत्सरस्य सांहोयं कामदाहो सतां ते॥ इति विश्व-
रूपनिबंधे॥ अत्र कृत्यम्॥ रघुं प्रति नारदवाक्यम्॥ अद्य पंचदशी शुक्ला फाल्गुनस्य नराधि-
प॥ शीतकालो विनिःक्रान्तः प्रातर्ग्रीष्मो भविष्यति॥ अभयं प्रदानं लोकानां दीयतां पु-
रुषोत्तम॥ यथाशु शंकिता लोका रमन्ति च हसन्ति च॥ संचयं शुष्ककाष्ठानामुपलानां
च कारयेत्॥ तत्राग्निं विधिवद्धुत्वा रक्षोघ्नैर्मन्त्रविस्तरैः॥ ततः किलकिलाशब्दैस्तालश- ५०७
[illegible]

नि. व्दैर्मनोरमैः ॥ तामभिंत्रिः परिक्रम्य गायंतु च हसंतु च ॥ जल्पन्तु स्वेच्छया लोका-
प. निःशंका यस्य यन्मतम् ॥ तेन शब्देन सा पापा होमेन च निराकृता ॥ सर्वदुष्टापहो-
होमः सर्वरोगोपशांतिदः ॥ अस्यां निशागमे राजन्संरक्ष्याः शिशवो गृहे ॥ गोमये-
नोपलिप्ते च सचतुष्के गृहांगणे ॥ आकारयेच्छिशुप्रायान्खड्गव्यग्रकरान्नरान् ॥
ते काष्ठखड्गैः संस्पृश्य शब्दैर्हास्यकरैः शिशून् ॥ रक्षंति तेभ्यो दातव्यं-
गुडं पक्वान्नमेव च ॥ एवं ढुंढेतिया तस्याः सदोषः प्रशमं व्रजेत् ॥ बालानां रक्षणं का-
र्यं तस्मात्तस्मिन्निशागमे ॥ इति होलिकानिर्णयः इति पौर्णमासी निर्णयः अथामावा-
स्या निर्णीयते ॥ अमा चोपवासादिषु प्रतिपद्युतैव वटसावित्री व्यतिरिक्तव्रतेषु ग्रा-
ह्या युग्मवाक्यात् ॥ अमावास्या तृतीयेति सा उपोष्या परान्विता ॥ भविष्ये ऽपि ॥ भू-
तविद्धाप्यमावास्या न ग्राह्या मुनिपुंगवैरिति ॥ अथ ज्येष्ठामावास्यायां पूर्वविद्धायां वटसावित्रीव्र-
तं कुर्यात् ॥ तत्रायं विधिः ॥ ज्येष्ठकृष्णत्रयोदशीमारभ्य त्रिरात्रोपोषणम् ॥ अथा— १८८

त्यातुत्रयोदश्यां नक्तं चतुर्दश्या मयाचितं ॥ अमायामुपवासं कृत्वा सुवर्णप्रतिमां द
द्यात् ॥ स्कान्दे ॥ अमायां च तथा ज्येष्ठे वटमूले महासती ॥ त्रिरात्रोपोषिता नारी वि
धिनानेन पूजयेत् ॥ अशक्त्या तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रियः ॥ अयाचितं चतुर्द-
श्याममायां समुपोषणम् ॥ गृहीत्वा वालुकां पात्रे प्रस्थमात्रं युधिष्ठिर ॥ ततो वंश
मये पात्रे वस्त्रयुग्मेन वेष्टितम् ॥ सावित्रीप्रतिमां कृत्वा सर्वावयवशोभिनीम् ॥ सौ
वर्णां मृण्मयीं वापि स्वस्वशक्त्या विनिर्मिताम् ॥ सांद्रसत्यवता साध्वीं फलनैवेद्यदी-
पकैः ॥ यथाबलं वित्तं कृत्वा काष्ठभारं युधिष्ठिर ॥ वित्तादौ सप्तधान्यैश्च बहुधा संप्रकल्पि-
तैः ॥ रजन्याः कंठसूत्रैश्च शुभैः कुंकुमकेसरैः ॥ सावित्र्याख्यानकं वापि वाचयीत द्विजो-
त्तमैः ॥ रात्रौ जागरणं कृत्वा नृत्यगीतपुरस्सरं ॥ ततः प्रभाते विधिना पूर्वोक्तेन नरोत्तम ॥
तामपि ब्राह्मणे दद्यात्प्रणिपत्य समापयेत् ॥ दानमंत्रश्च ॥ ॐ सावित्रीयं मया दत्ता सहिर-
ण्या महासती ॥ ब्राह्मणप्रीणनार्थाय ब्राह्मण प्रतिगृह्यतामिति ॥ एवं दत्त्वा द्विजेन्द्रा-

व्र.रि. स सावित्रीव्रतं युधिष्ठिर ॥ नैवेद्यादि च तत्सर्वं ब्राह्मणस्य गृहं नयेत् ॥ स्वयं स्वगृहं गच्छे-
४४७ त्तच वेश्म पुनराव्रजेत् ॥ तत्र भुक्त्वा हविष्यान्नं ब्राह्मणी ब्राह्मणैः सह ॥ विसर्जयेत्ततो वि-
प्रान्सावित्री प्रीयतामिति ॥ व्रतेनानेन राजेन्द्र वैधव्यं नाप्नुयात्क्वचित् ॥ इति वटसावित्री ॥
अथ भाद्रमायां कुशग्रहणम् ॥ हेमाद्रौ हारीतः ॥ मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ॥
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ नभस्यो भाद्रपदः तत्क्रमः ॥ शुचौ देशे शु-
चिर्भूत्वा स्थित्वा पूर्वोत्तरामुखः ॥ ॐकारेण तु मंत्रेण सकृदेव कुशांस्पृशेत् ॥ सकृदेव अथ-
मतएव ॥ दर्भोत्पाटने मंत्रः ॥ विरिञ्चिना सहोत्पन्न परमेष्ठिनिसर्गज ॥ नुद सर्वाणि पापानि
मम स्वस्तिकरो भव ॥ कुशमूले स्थितो ब्रह्मा कुशमध्ये तु केशवः ॥ कुशाग्रे तु हरो देव-
स्त्रयो देवाः कुशे स्थिताः तद्ग्रहणं च ॥ अच्छिन्नाग्रान्सपत्रान्समूलान्कोमला-
न्शुभान् ॥ पितृदैवयज्ञार्थं च समादद्यात्कुशान्द्विजः ॥ सर्वे पराश्शुभा दर्भास्तिलश्चे-
त्रसमुद्भवाः तेसमस्तानि योक्तव्या दैवे पित्र्ये च कर्मणि ॥ जातमात्रो भवेद्दर्भः सामप्रभू- ४२०

लः कुशास्स्मृताः सप्तपर्णास्तु कुतप श्छिन्नाग्रास्तृणा उच्यते ॥ अच्छिन्नाग्रा अशुष्काग्रा
हस्ता प्रादेशमात्रकाः कुतपा इति विज्ञेयास्तैस्तु श्राद्धं समारभेत् ॥ अथ कार्त्तिकामावास्या दी-
पमाला ॥ सा सुखरात्रिरित्युच्यते ॥ प्रदोषार्द्धरात्रव्यापिन्येव । तेनास्याः पूर्वविद्धात्वं प्र-
सिद्धम् ॥ उक्तं च ॥ दीपमाला न कर्त्तव्या प्रतिपन्मिश्रिता क्वचित् ॥ श्रीर्णालं न विनश्यंति
प्रजा गावो मही पति रिति ॥ अस्यां नववस्त्रादि धारणं लक्ष्मी पूजां च कुर्य्यात् ॥ ब्राह्मे ॥
अमायां च तथा देवाः कार्त्तिके मासि केशवात् ॥ अभयं प्राप्य सुप्तास्तु सुखं क्षीरोदसा-
नुषु ॥ लक्ष्मीर्दैत्यभयान्मुक्ता सुखं सुप्ताम्बुजोदरे ॥ अतोऽर्थं विधिवत्कार्य्या मनुष्यैः
सुखसुप्तिका ॥ दीपान्दत्वा प्रदोषे तु लक्ष्मी पूज्य यथाविधि ॥ स्वलंकृतेन भोक्तव्यं सूते-
वालातु सज्जयन् ॥ अपराह्णे प्रकर्त्तव्यं श्राद्धं पितृपरायणैः ॥ प्रदोष समये राजन्कर्त्त-
व्या दीपमालिका ॥ दीपवृक्षास्तथा कार्य्याः शक्त्या देवगृहेषु च ॥ दीपदानं यथाशक्ति
विप्रमित्र सुरालये । चतुःपथे श्मशाने तु नदीपर्वतगोगृहे । दीपमाला परिक्षिप्ते प्रदो-

ये तदनन्तरम् ॥ ब्राह्मणान्भोजयित्वादौ विभज्य च तु भुक्षितान् ॥ अलंकृतेन भोक्तव्यं नववस्त्रोपशोभिना ॥ अत्रैव राजकौमुदीमहोत्सवं कुर्यात् ॥ यदुक्तं ॥ ततोपराह्णसमये घोषयेन्नगरे नृपः ॥ सर्वराज्यं बलं लोकान् यथेष्टं चेष्टतामिति ॥ लोकैश्चापि पुरं पुष्पसुधाद्यवलितान्विते ॥ हस्तचंदनमालाढ्ये चर्चिते च गृहे गृहे ॥ दीपयानरतो युते नरनारीमनोहरे ॥ दीपमालाकुलेरम्ये विध्वस्तध्वांतसंचये ॥ अदोषे दोषरहिते सत्ते दोषागमे शुभे ॥ वेश्याविलासिनीसार्थैः स्वस्तिमंगलकारिणि ॥ गृहाङ्गणं व्रजेत च पादाभ्यां सेवया पिरिः ॥ ततोऽर्द्धरात्रसमये स्वयं राजा पुरं व्रजेत् ॥ अवलोकयितुं रम्यं पद्भ्यामेव शनैः शनैः ॥ ततः प्रदोषसमये नारीभिर्गृहाद्दलक्ष्मीर्निःकास्यते ॥ तदपि स्कांदे ॥ एवं गते निशीथे तु जने निद्रार्द्धलोचने ॥ तावन्नगरनारीभिः सूर्पडिंडिमवादनैः ॥ निःकास्यते प्रहृष्टाभिरलक्ष्मीः स्वगृहांगणात् ॥ इति कार्तिकी अमावास्या ॥ अथ माघी ॥ तस्यां ब्राह्मणं सा विप्रो सहितं संपूज्य नवनीतधेनुं दद्यात् ॥ तदेव भ-

सं.शि. विध्ये ॥ अमायां चैव माघस्य पूजयित्वा पितामहम् ॥ गायत्र्या सहितं देवं वेदगर्भ-
४८३ पितम् ॥ नवनीतमयीं धेनुं फलैर्नानाविधैर्युताम् ॥ सहिरण्यां सवत्सां च ब्राह्मणा-
य निवेदयेत् ॥ अत्र माघपौषयोरमावास्या रविवारश्रवणव्यतीपातयोगैर्युता
चेदसावर्द्धोदयाख्यः ॥ कोटिग्रहणसन्निभो योगः ॥ तथा च स्कान्दे सेतुमाहात्म्ये ॥ अमा-
र्कपातश्रवणैर्युता चेन्माघपौषयोः ॥ अर्द्धोदयस्स विज्ञेयः कोटिसूर्यग्रहैस्समः
॥ दिवैव योगस्त्वयं न तु रात्रौ कदाचनेति ॥ अर्द्धोदये तु संप्राप्ते सर्वं गंगाजलं समं ॥
शुद्धात्मानो द्विजास्सर्वे भवेयुर्ब्रह्मसन्निभाः ॥ यत्किंचिद्दीयते दानं तद्दानं मेरुसन्नि-
भमिति ॥ अत्र दानादौ विशेषः ॥ चतुःषष्टिपलं मुख्यमन्नं तत्र कारयेत् ॥ चत्वारिंशत्प-
लं चाथ पंचविंशतिमेव वा ॥ निधाय पायसं तत्र पद्ममष्टदलं लिखेत् ॥ पद्मस्य
कर्णिकायां तु कर्षमात्रं सुवर्णकम् ॥ तदभावे तदर्द्धं वा तदर्द्धं वापि कारयेत् ॥ कृत्वा तु तंडुलैः
शुद्धैः पद्ममष्टदलं शुभम् ॥ अमत्र स्थापयेत्तत्र ब्रह्मविष्णुशिवात्मकमिति ॥ तेषां ४८३

स.नि ४९४ शीति करधाय श्वेत माल्यैस्तु शोभनैः ॥ वस्त्रादिभिरलंकृत्य ब्राह्मणाय निवेदयेत्
दानमंत्रः ॥ सुवर्णपायसाभत्रं यस्मादेतन्मयीभवं ॥ आवयोस्तारकं यस्मात्तद्गृहाण
द्विजोत्तम ॥ समुद्रमेखलां पृथ्वीं सम्यग्दत्वा स्य यत्फलम् ॥ तत्फलं लभते मर्त्यो दत्वा
दानं समन्त्रकम् ॥ इत्यर्द्धोदयविधिः ॥ अमावास्या तु सोमेन सप्तमी भानुना सह ॥ चतुर्थी
भूमिपुत्रेण बुधवारेण चाष्टमी ॥ चतस्रस्तिथयस्त्वेताः सूर्य्यग्रहणसन्निभाः ॥ स्नानं दा
नं तथा श्राद्धं सर्वं तत्राक्षयं भवेदिति ॥ इत्युपवासाद्यमावास्यानिर्णयः अथ श्राद्धेऽमावा
स्या निर्णीयते ॥ सापराह्णव्यापिन्येव ॥ एकोद्दिष्टश्राद्धे तु अष्टमनवममुहूर्त्तव्यापिन्येव
ग्राह्या ॥ मात्स्ये ॥ अष्टमे नवमे यस्मान्मंदीभवति भास्करः ॥ तस्मादनंतफलदस्तत्रारं
भो विशेषत इति ॥ कुतुपे प्रथमे भागे एकोद्दिष्टमुपक्रमेदिति व्यासः अष्टममुहूर्त्ता
ख्ये कुतुपे आरंभ इति तदर्थः ॥ अत्र पार्वणं त्वेकादश मुहूर्त्ते ॥ अपराह्णः पितॄणामित्यु
क्तेः दिनद्वये ऽपराह्णव्याप्तौ यत्राधिका तद्व्यापिनी ग्राह्या ॥ अपराह्णद्वयव्यापिन्यमावा ४९९

शि. स्याद्यदाभवेत् ॥ तत्राल्पत्वलहत्वास्यांनिशोयः पितृकर्माणि । शिवराघवसंवादे ॥ अमा
२५ वास्याहिसातुस्यादपराह्णद्वयेसमा ॥ क्षयेपूर्वापरावृद्धौ साम्येऽपिचपरास्मृतेति ॥ द्वि-
नद्वयेऽप्यपराह्णव्याप्यभवेऽपिपरैव ॥ पूर्वेद्युरेवापराह्णव्याप्तौ ॥ बौधायनः ॥ घटिकैका-
प्यमावास्याप्रतिपत्सुनचेत्तदा ॥ भूतविद्धैवसाग्राह्यादैवेपैत्र्येचकर्मणि ॥ प्रतिप-
द्घटिकैकापिकर्मकालेनास्तिचेदित्यर्थः ॥ अथमलमासेवर्ज्यादिनिर्णयः ॥ तत्र-
काम्यंनिषिध्यते ॥ जावालिः ॥ नित्यनैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे ॥ तिथि-
नक्षत्रवारोक्तंकाम्यंनैवकदाचनेति ॥ नित्यनैमित्तिकयोरपियदनन्यगतिकंतदेव
कुर्यात् ॥ अनन्यगतिकंकुर्यान्नित्यंनैमित्तिकंतथेतिस्मरणात् ॥ गृह्यपरिशिष्टे
अवषट्कारहोमाश्चपर्वचाग्रयणंतथा ॥ मलमासेतुकर्तव्यंकाम्यादिष्टिंविवर्जयेदि-
ति ॥ अवषट्कारहोमावैश्वदेवाग्निहोत्राद्याः ॥ सर्वदर्शपौर्णमास्यौ ॥ तत्रैवसोम-
यागादिकर्माणिनित्यान्यपिमलिम्लुचे ॥ अष्टीज्याग्रयणाधानचातुर्मास्यादिका

न्यपि ॥ महालयाष्टका श्राद्धोपाकर्माद्यपि कर्म्म यत् ॥ अस्तमासविशेषाख्यं विहितं वर्ज्जयेन्मलेतियमः ॥ चंद्रसूर्य्यग्रहेस्नानं श्राद्धं दानं जपादिकम् ॥ कार्य्याणि मलमासेतु नित्यं नैमित्तिकं तथेतियमः ॥ गर्भेवार्धुषिते भृत्ये श्राद्धकर्म्मणि मासिके । सपिण्डीकरणे नित्यं नाधिमासं विवर्ज्जयेत् ॥ तीर्थस्नानं जपो होमो जवव्रीहितिलादिभिः ॥ जातकर्म्मान्त्यकर्म्माणि नव श्राद्धं तथैव च ॥ मघात्रयोदशीश्राद्धं श्राद्धान्यपि च षोडश ॥ मासिके श्राद्धे अमायाः नित्य दाने होमो ऽन्नोपाशनः ॥ अन्त्यकर्म्माणि दाहोदकपिंडदानास्थिसंचयनादीनि ॥ मरीचिः ॥ मन्वादौ च युगादौ च मासयोरुभयोरपीति ॥ मात्स्ये ॥ वर्षे पापहरं श्राद्धं दानं च प्रति वत्सरम् ॥ गोभूतिलहिरण्यानां दानं मासे मलिम्लुचे ॥ इतिभृगुः ॥ वृद्धिश्राद्धं तथा सोममग्न्याधानं महालयम् ॥ राज्याभिषेकं काम्यं च न कुर्य्याद्भानुलंघिते इति स्मृत्यन्तरे ॥ नभो वाथ नभस्यो वा मलमासो यदा भवेत् ॥ आषाढ्याः सप्तमः पक्षः पितृपक्षस्तदा भवेत् ॥ हारीतः ॥

म.दि. असंक्रांते हि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ॥ तथैव मासिकं श्राद्ध सपिंडी कर

४९७ ति ॥ भृगुः ॥ मल मास मृतानां तु यच्छ्राद्धं प्रति वत्सरम् ॥ मल मासे तु तत्कार्य्यं

नान्येषान्तु कदाचन ॥ एवं च शुद्ध मास मृतानां तु प्रथमाब्दिकं मलेऽपि कार्य्य

मिति ॥ द्वादशे मासि सर्वत्र फलंति श्राद्ध कान्तरं तु शुद्धे त्रयोदशे ॥ यदा तु मध्ये म

ल मास पातस्तदा पित्र्यो दशे मासे ॥ यतः ॥ मल मास मृतानां तु मले स्यादाब्दि

कांतरम् ॥ वृद्धमनुः ॥ अग्न्याधेयं प्रतिष्ठां च यज्ञं दानं व्रतानि च ॥ देव व्रत वृषो

त्सर्ग चूडा करण मेखलाम् ॥ मांगल्य मभिषेकं च मल मासे विवर्ज्जयेत् ॥ तथा

वापी कूप तडागादि प्रतिष्ठा यज्ञ कर्म्म च ॥ न कुर्य्यान्मल मासे तु महा दान

व्रतानि च ॥ वृषोत्सर्गोऽत्र काम्यः ॥ अथ ग्रहण निर्णयः ॥ वृद्धगौतमः ॥ सूर्य्य ग्र

हे तु नाश्नीयात् पूर्वं याम चतुष्टयम् ॥ चंद्र ग्रहे तु यामांस्त्रीन्बाल वृद्धातु

रैर्विना ॥ वशिष्ठः ॥ ग्रस्तो दये विधोः पूर्वं नाह र्भोजन माचरेत् ॥ भृगुः ॥ ४९७

संग्रि ग्रस्ता वेवास्त मानं तु रवीन्दू प्राप्नुतो यदि ॥ परेद्युरुदये स्नात्वा शुद्धो ऽभ्य वह-
४८८ रेन्नरः ॥ अत्र भोजने प्राय श्चित्त मुक्तम् ॥ कात्यायनेन ॥ चन्द्र सूर्य्य ग्रहे
भुक्त्वा प्राजा पत्येन शुध्यति ॥ तस्मि न्नेव दिने भुक्त्वा त्रि रात्रे णैव शुध्यति ॥
भारते ॥ सर्व स्वे नैव कर्त्तव्यं श्राद्धं वै राहु दर्शने ॥ अकुर्वाणस्तु नास्तिक्या-
त्पंके गौरिव सीदतीति ॥ सातातपः ॥ आपद्यन ग्नौ तीर्थे च ग्रहणे चंद्रसूर्य्य-
योः ॥ आम श्राद्धं द्विजः कुर्य्या च्छूद्रः कुर्य्या त्सदैवहि ॥ वृद्ध वशिष्ठः ॥
सूत के मृत के चैव न दोषो राहु दर्शने ॥ ताव देव भवे च्छुद्धि र्यावन्मुक्ति
र्न दृश्यते ॥ इति षट्त्रिंशन्मते ॥ सर्वेषा मेव वर्णानां सूत के राहु दर्शने ॥
स्नात्वा कर्म्माणि कुर्वीत शृत मन्नं विसर्ज्जये दिति ॥ मेधा तिथिः ॥ आर ना
लं पय स्तक्रं दधि स्नेहाज्य पाचितम् ॥ मणि कस्थो दकं चैव न दुष्ये द्राहु
सूतके ॥ मन्वर्थ मुक्ता वल्याम् ॥ अन्नं पक्व मिह त्याज्यं स्नानं स वसनं ग्रहे ४८८

सं-शि ॥ वारि तक्कार नाला द्विलिल द्वर्भा न दुष्यति ॥ ग्रहो षितं जलं पीत्वा पाद कृ-
४६६ च्छ्रं समा चरेत् ॥ योग विशेषो ग्रहणो व्यासः ॥ रवि ग्रहः सूर्य्य वारे सोमे सोम-
ग्रह स्तथा ॥ चूडा मणि रिति ख्यात स्तत्र दत्त मनं तकम् ॥ वारेष्व न्येषु यत्पु
ण्यं ग्रहणो चन्द्र सूर्य्ययोः ॥ तत्पुण्यं कोटि गुणितं योगे चूडा मणौ स्मृतः
॥ द्विवेदि कुल संभूत सरयू कृत संग्रहे ॥ शिरो मणौ समाज्ञेया प्रमेयं तत्त्व
संज्ञका ॥ दुर्गा नंद पद द्वन्द्व ध्याना वस्थित चेतसा ॥ तनि तोयं हि सत्त्री-
त्वे संग्रहाख्य शिरो मणिः ॥ भूरा माङ्कु शिरो वर्षे वैक्र मीये शुभे शुचौ ॥
समाप्तोयं सदा भूया द्वि दुषां प्रीति दः शुभः ॥ यावद्भू मण्डले सन्ध्या वैदि-
कं कर्म्म सज्जनाः ॥ तावत्स्वस्ति युतो भूया त्संग्रहाख्य शिरो मणिः
इति श्री मद्वि वेदि कुल संभव सरयू दत्त विर चिते ॥ संग्रह शिरो मणौ
नाम्नि ग्रंथे तिथि निर्णय कथनं नाम चतु र्विंशति तमा प्रभा समाप्ता समा- ४६६

संशि ५०० सोऽयं संग्रह शिरो मणिनाम ग्रंथः ॥ सम्वत् १९५१ माघ मासे कृष्ण पक्षे अष्टम्यां रवि वासरे समाप्तः ॥ शुभ मस्तु ॥ लिखित मिदं पुस्तकं वैजनाथेन द्वि वेदिना ॥

सोऽयं संग्रह शिरो मणिनाम ग्रंथः ॥ सम्वत् १८५१ माघ मासे कृष्ण पक्षे
५०० अष्टम्यां रवि वासरे समाप्तः ॥ शुभ मस्तु ॥ लिखित मिदं पुस्तकं वैजनाथेन
द्विवेदिना ॥